करण्यघटितव्यापकतावच्छेदकत्वरूपतायाः प्राक् दर्शितत्वात् तत्र च प्रतियोगितावच्छेदकविशिष्टत्वादेरनिवेशात् ।

ननु तादृशावच्छेदकतानवच्छेदकत्वं तादृशावच्छेदकत्वत्वाच्छिन्नतादृशावच्छेदकत्वनिष्ठप्रतियोगिताकत्वम् ; तत्र च तादृशावच्छेदकतात्वेन घटाभावस्य घटाभावीयप्रतियोगितासाधारण्येन घटाभावस्यापि लक्षणघटकत्वादसंभववारणायोपादेयप्रतियोगितायामवच्छेदकत्वनिष्ठत्वं व्यर्थम् स्यादिति व्यधिकरणधर्मावच्छिन्नाभावस्यावश्यकत्वमस्त्येवेति ; मैवम् ; प्रतियोगितासंबन्धेन तादृशावच्छेदकत्वत्वविशिष्टविशिष्टाभावस्यैव निवेशात् समानाधिकरणधर्मावच्छिन्नाभावस्यैव तथात्वात् तस्य घटाभावीयप्रतियोगितासामानाधिकरण्यविरहात् । एवं [1]सति स्वविशिष्टसामान्ये साध्यवद्यत्किञ्चिद्व्यक्त्यसंबद्धत्वघटितपरिष्कारेऽपि स्वविशिष्टत्वावच्छेदेनैव प्रतियोगितया साध्यवद्यत्किञ्चिद्व्यक्तिसंबद्धत्वत्वविशिष्टविशिष्टाभाव एव निवेशनीय इति न कोऽपि पूर्वपक्षावकाश. इत्यलम् ।

"द्रव्यत्वेन धूमो नास्तीति"। अथ द्रव्यत्वेन धूमाभावीयप्रतियोगिताया द्रव्यत्वस्यावच्छेदकत्वेऽपि प्रतियोगितावच्छेदकेत्यनेन प्रतियोगिताया अनतिरिक्तवृत्ति सत् यदवच्छेदकमित्यादिविवक्षाया आवश्यकत्वेन तादृशाभावीयप्रतियोगिताया द्रव्यत्वादे अतिरिक्तवृत्तित्वेनैव नातिव्याप्ति । अथ सामान्यधर्मस्य विशेषाभावीयप्रतियोगितायामवच्छेदकत्वस्वीकारे मिश्रलक्षणे प्रमेयत्वेन गगनाभावस्य साध्याभावव्यापकतया तत्प्रतियोगितावच्छेदकत्वस्य प्रमेयत्वे सत्वात् वाच्यत्वसाध्यकप्रमेयहेतुकेऽव्याप्तिकथनं दीधितिकृतो विरुध्येत ; न च प्रमेयत्वस्य प्रमाविषयत्वरूपस्य विषयत्वापेक्षया गुरुत्वेनाभावप्रतियोगितावच्छेदकत्वं न संभवतीत्यव्याप्तिसंगतिरिति वाच्यम् ; एवं सति प्रमेयत्वस्य गुरुत्वेनानवच्छेदकत्वादित्युपेक्ष्य

[1] "सति" नास्ति—ग.

“एवं सर्वत्र हेतुसमानाधिकरणमुभयत्वावच्छिन्नाभावमि”ति । [1]
वाच्यत्वगगनोभयत्वाद्यवच्छिन्नाभावमित्यर्थ. । तादृशोभयत्वावच्छिन्नाभावीय-
प्रतियोगिताया अव्यासज्यवृत्तितया साध्यवति तादृशप्रतियोगित्वावच्छिन्ना-
भावासत्वात् लक्षणघटकत्वमव्याहतम् ।

अथ द्वितीयचक्रवर्तिलक्षणे यथा व्यधिकरणधर्मावच्छिन्नाभावस्या-
प्रामाणिकत्वे सामानाधिकरण्येनानवच्छेदकत्वमित्यत्र सामानाधिकरण्येनेति
व्यर्थं स्यादिति तदावश्यकत्वं तथा अत्रापि व्यधिकरणधर्मावच्छिन्नाभावस्या-
प्रामाणिकत्वे साध्यवन्निष्ठाभावीयप्रतियोगिताया सामानाधिकरण्येनानवच्छे-
दकत्वरूपसाध्यव्यापकतावच्छेदकत्वघटकसामानाधिकरण्येनेत्यस्य वैयर्थ्यं
स्यादिति तदावश्यकत्वम्; यदि च प्रतियोगिवैयधिकरण्याघटितव्यापकता-
वच्छेदकत्वस्य गौरवग्रस्तत्वात् तद्घटितव्यापकतावच्छेदकत्वमेव ग्रन्थकृदभि-
मतमिति मन्यते; तदापि तादृशव्यापकतावच्छेदकत्वस्य यादृशप्रतियोगिता-
वच्छेदकविशिष्टानधिकरणं साध्यवत् तादृशप्रतियोगितानवच्छेदकत्वरूपस्य
शरीरे यादृशप्रतियोगितावच्छेदकविशिष्टत्ववैयर्थ्यस्य दुर्वारत्वादिति चेन्न;
साध्यवन्निष्ठभेदप्रतियोगितावच्छेदकतानवच्छेदकत्वरूपस्यैव प्रतियोगिवैयधि-

1 “उभयत्वावच्छिन्नप्रतियोगिताक साध्याभावम्” इत्येव पाठो गादाधर्यां
दृश्यते—स्व.

करण्यघटितव्यापकतावच्छेदकत्वरूपतायाः प्राक् दर्शितत्वात् तत्र च प्रतियोगितावच्छेदकविशिष्टत्वादेरनिवेशात् ।

ननु तादृशावच्छेदकतानवच्छेदकत्वं तादृशावच्छेदकत्वत्वावच्छिन्नतादृशावच्छेदकत्वनिष्ठप्रतियोगिताकत्वम् ; तत्र च तादृशावच्छेदकतात्वेन घटाभावस्य घटाभावीयप्रतियोगितासाधारण्येन घटाभावस्यापि लक्षणघटकत्वादसंभववारणायोपादेयप्रतियोगितायामवच्छेदकत्वनिष्ठत्वं व्यर्थम् स्यादिति व्यधिकरणधर्मावच्छिन्नाभावस्यावश्यकत्वमस्त्यंवेति ; मैवम् , प्रतियोगितासंबन्धेन तादृशावच्छेदकत्वत्वविशिष्टविशिष्टाभावस्यैव निवेशात् समानाधिकरणधर्मावच्छिन्नाभावस्यैव तथात्वात् तस्य घटाभावीयप्रतियोगितासामानाधिकरण्यविरहात् । एवं [1]सति स्वविशिष्टसामान्ये साध्यवद्यत्किञ्चिद्व्यक्त्यसंबद्धत्वघटितपरिष्कारेऽपि स्वविशिष्टत्वावच्छेदेनैव प्रतियोगितया साध्यवद्यत्किञ्चिद्व्यक्तिसंबद्धत्वत्वविशिष्टविशिष्टाभाव एव निवेशनीय इति न कोऽपि पूर्वपक्षावकाशः इत्यलम् ।

"द्रव्यत्वेन धूमो नास्तीति"। अथ द्रव्यत्वेन धूमाभावीयप्रतियोगिताया द्रव्यत्वस्यावच्छेदकत्वेऽपि प्रतियोगितावच्छेदकेत्यनेन प्रतियोगिताया अनतिरिक्तवृत्ति सत् यदवच्छेदकमित्यादिविवक्षाया आवश्यकत्वेन तादृशाभावीयप्रतियोगिताया द्रव्यत्वादे अतिरिक्तवृत्तित्वेनैव नातिव्याप्तिः । अथ सामान्यधर्मस्य विशेषाभावीयप्रतियोगितायामवच्छेदकत्वस्वीकारे मिश्रलक्षणे प्रमेयत्वेन गगनाभावस्य साध्याभावव्यापकतया तत्प्रतियोगितावच्छेदकत्वस्य प्रमेयत्वे सत्वात् वाच्यत्वसाध्यकप्रमेयहेतुकेऽव्याप्तिकथनं दीधितिकृतो विरुध्येत ; न च प्रमेयत्वस्य प्रमाविषयत्वरूपस्य विषयत्वापेक्षया गुरुत्वेनाभावप्रतियोगितावच्छेदकत्वं न संभवतीत्यव्याप्तिसंगतिरिति वाच्यम् ; एवं सति प्रमेयत्वस्य गुरुत्वेनानवच्छेदकत्वादित्युपेक्ष्य

[1] "सति" नास्ति—ग.

प्रमेयत्वव्यधिकरणप्रतियोगिताया अप्रसिद्धत्वादिति लेखनस्वारस्यभङ्गादिति चेन्न; "धूमवान् वह्ने"रित्यादौ धूमाभावव्यापको यो वह्नित्वेनायोगोलकवृत्तिवह्नितदन्यवृत्तिवह्न्युभयाभावः तत्प्रतियोगितावच्छेदकत्वमादायातिव्याप्तिवारणाय स्वसमानाधिकरणस्वनिरूपकाभाववद्वृत्तितानवच्छेदकस्वावच्छेदकस्य प्रतियोगितावच्छेदकेत्यनेन विवक्षणीयतया उक्तस्थले प्रमेयत्वस्यातथात्वेनाव्याप्तिकथनविरोधाभावात्;

अत्र केचित्—प्रतियोगिताया न्यूनवृत्तिभिन्नं सत् यदवच्छेदकमिति प्रथमपरिष्कारातिव्याप्तिवारणानुरोधेन वस्तुगतिमनुरुध्य वा द्रव्यत्वस्य तादृशाभावप्रतियोगितावच्छेदकत्वनिराकरणमित्याहुः।

ननु द्रव्यत्वेन धूमाभावीयप्रतियोगितायां द्रव्यत्वस्यावच्छेदकत्वास्वीकारे शुद्धधूमवत्तानिश्चयोत्तरं द्रव्यत्वेन धूमाभाववत्तावुद्धयनापत्तिः; तस्याः धूमवत्तानिश्चयप्रतिबद्धयतावच्छेदकधूमत्वावच्छिन्नप्रतियोगिताकाभावत्वावच्छिन्नप्रकारताशालिबुद्धित्वाक्रान्तत्वादिति चेन्न; शुद्धधूमत्वावच्छिन्नप्रतियोगितासंबन्धावच्छिन्नशुद्धधूमत्वावच्छिन्नप्रकारताघटितधर्मस्यैव धूमवत्तानिश्चयप्रतिबद्धयतावच्छेदकत्वोपगमात्; तादृशप्रतीतौ द्रव्यत्ववैशिष्ट्यस्याधिकस्य धूमांशे भानात् नोक्तापत्तिः; [1]द्रव्यत्वेन धूमाभावीयप्रतियोगितायां द्रव्यत्वस्यावच्छेदकत्ववादिनोऽपि महानसीयधूमो नास्तीति बुद्धेः धूमवत्तानिश्चयप्रतिबद्धयत्ववारणाय निरुक्तरूपस्य प्रतिबद्धयतावच्छेदकत्वोपगमस्य आवश्यकत्वाच्च।

धूमशून्येऽङ्गारशेषे धूमवद्वृत्तित्वविशिष्टवह्न्यभावासत्वात् तादृशाभावस्य न धूमाभावसमनैयत्यसंभव इति धूमकालावच्छिन्नेति धूमवद्वृत्तित्वे

[1] निरुक्तरूपस्य प्रतिबध्यतावच्छेदकत्वोपगमेऽपि सिद्धान्तिमते गौरवं नास्तीति प्रतिपादयति—"द्रव्यत्वेनेत्यादिना"—स्व.

विशेषणम् ; उक्तप्रतीतेः वह्नित्वेऽवच्छेदकतावगाहित्वेऽपि तद्विषयस्य सामा-
न्यरूपेण विशेषाभावत्वाप्रसक्तेः इत्यभिप्रायेणाह—"अस्तु वे"ति ।
"घटभिन्नत्वेने"ति । अत्र धूमत्वस्यावच्छेदकताप्रयोजकतृतीयान्तोल्लेख्यत्वा-
भावात् घटधूमभेदद्वयावच्छिन्नप्रतियोगिताकभेदवत्त्वरूपान्यतरत्वावच्छिन्न-
रूपप्रतियोगिनि साक्षात् विशेषणत्वाभावाच्च न तादृशाभावप्रतियोगिता-
वच्छेदकत्वशंकेति ध्येयम् । "भेदत्वेने"ति । अत्राप्ययोगोलकभेदशून्ये
घटाभाववति तादृशप्रतीत्यनुदयापत्तेः न तादृशान्यतरत्वमात्रस्य प्रतियोगि-
तावच्छेदकत्वम् । भेदत्वेनायोगोलकभेदघटान्यतराभावस्य संयोगसंबन्धा-
वच्छिन्नप्रतियोगिताकस्य केवलान्वयित्वेन नायोगोलकभेदाभावसमनैयत्यं ;
स्वरूपसंबन्धावच्छिन्नप्रतियोगिताकस्य तत्समनैयत्यसंभवेऽपि अयोगोलक-
भेदशून्यस्य स्वरूपसंबन्धेन तादृशान्यतरत्वावच्छिन्नवतोऽप्रसिद्धत्वेनाति-
प्रसङ्गविरहात् तादृशान्यतरत्वस्यैव प्रतियोगितावच्छेदकत्वसंभवेनातिव्याप्त्य
प्रसक्तेः तादृशाभावोपेक्षेति ध्येयम् । "न्यूनवृत्तित्वं चे"ति । यद्यपि
वाच्यत्वसाध्यके लक्षणघटकज्ञेयत्वत्वेन वाच्यत्वाभावीयप्रतियोगिताया न्यून-
वृत्त्यैव ज्ञेयत्वत्वं न्यूनवृत्तित्वनिरुक्तौ स्वपदेन तदभावीयप्रतियोगिताया
एवोपादेयतया समनियताभावैक्यमते तादृशाभावस्य वाच्यत्वत्वेन ज्ञेयत्वा-
भावाभिन्नतया तदीयप्रतियोगिताया ज्ञेयत्वेऽपि सत्वात्, तथापि स्वसमाना-
धिकरणभेदप्रतियोगितावच्छेदकत्व-स्वावच्छेदकत्व-सामानाधिकरण्यैतत्त्रितय-
संबन्धावच्छिन्नप्रतियोगिताकतदभावीयप्रतियोगित्वाभाववत्तदभावीयप्रतियो -
गितावच्छेदकं न्यूनवृत्तिभिन्नं सत् यदवच्छेदकमित्यनेन विवक्षणीयमिति न
दोषः । एतत्कल्पे साध्यव्यापकतावच्छेदकरूपावच्छिन्नप्रतियोगितायामपि
स्वन्यूनवृत्तिधर्मानवच्छिन्नत्वं देयम् ; तेन वह्निसाध्यके वह्नित्वेन महानसीयव-
ह्निघटान्यतराभावस्य यावदन्तर्गतस्य प्रतियोगिताया न्यूनवृत्तिभिन्नावच्छेद-
काप्रसिद्धावपि न क्षतिः ।

वह्न्याद्यभावीयप्रतियोगितायाः प्रमेयसामान्यवृत्तित्वे त्वाह—"अथ-वे"ति। "स्वव्यापकतत्कान्यत्वे"ति। स्वनिरूपकत्व-स्वाश्रयसमानाधि-करणभेदप्रतियोगितावच्छेदकत्व-स्वाश्रयसामानाधिकरण्यैतत्त्रितयसंबन्धेनाव-च्छेदकताविशिष्टान्यप्रतियोगितावच्छेदकमेव तादृशोभयाभाववत्प्रतियोगिताव-च्छेदकमित्यनेन विवक्षणीयमिति नाननुगमादि[1] दोषः; एतत्कल्पे व्यापक-तावच्छेदकरूपावच्छिन्नप्रतियोगितायामपि निरुक्तत्रितयसंबन्धेनावच्छेदकता-विशिष्टान्यत्वं देयं; तेन वह्नित्वेन महानसीयवह्निघटान्यतराभावीयतादृशा-वच्छेदकत्वस्याप्रसिद्धावपि नाव्याप्तिः।

अत्र स्वव्यापकत्वशरीरे स्वाधिकरणत्वस्य प्रतियोगितावच्छेदकता-घटकसंबन्धेनैव विवक्षणीयतया यादृशाभावप्रतियोगितावच्छेदकताघटकः कालिकसंबन्धो विषयितासंबन्धो वा तदभावीयतादृशप्रतियोगितावच्छेदक-त्वस्य स्वव्यापकतत्कान्यत्वाप्रसिद्ध्या अप्रसिद्धिरत आह—"स्वन्यूनवृत्ति-भिन्नायाः प्रतियोगितायाः" इति। अवच्छिन्नत्व-सामानाधिकरण्य-समानाधिकरणभेदप्रतियोगितावच्छेदकत्वैतत्त्रितयसंबन्धेन धर्मविशिष्टान्याया इत्यर्थः; तेन नाननुगमः। एतत्कल्पे व्यापकतावच्छेदकरूपावच्छिन्नप्रति-योगितायामपि निरुक्तत्रितयसंबन्धेन धर्मविशिष्टान्यत्वं देयं, तेन न वह्नित्वेन महानसीयवह्निघटान्यतराभावीयप्रतियोगितायाः तादृशत्वविरहेऽपि अव्याप्तिः।

निरुक्तकल्पत्रयेऽपि भावरूपप्रतियोगिसामानाधिकरण्यनिवेशावश्यक-तया गौरवात् आह—"तत्प्रतियोगितासमानाधिकरणे[2]"ति। एतत्कल्पे प्रतियोगिनि भावत्वनिवेशः प्रयोजनाभावाद्धेय.।

[1] अत्र पाठभेदः गादाधर्यां दर्शितः—स्व.

[2] सामानाधिकरणमिति गदाधरी—स्व.

[3] विशेषणताविशेषेण किंचिद्विशिष्टस्वाभावनिष्ठतादृशाभावत्वस्यप्रतियोगितावच्छेदका-वच्छिन्नसामान्याधिकरण्यमस्तीति व्यभिचारिणि नतिव्याप्तिः; तद्वारणाय प्रतियोगिता-

"असभव" इति । हेतुसामानाधिकरण्यांशे स्वरूपसबन्धनिवेश पर्यवसितभावभिन्नत्वनिवेशाभिप्रायेण । "अव्याप्तिरि"ति । व्यापकता-वच्छेदकरूपे भाववृत्तित्वनिवेशकल्पाभिप्रायेण, तत्कल्पे [2]भावभिन्नत्वा निवेशात् । "प्रमेयसाध्यकस्थल" इति । ननु एतत्कल्पे धूमसाध्यके कालिकसम्बन्धेन धूमाभावप्रतियोगितावच्छेदकविशिष्टवह्निसामानाधिकरण्य -मादायातिव्याप्तिवारणाय प्रतियोगितावच्छेदकताघटकसम्बन्धेन प्रतियोगितावच्छेदकवैशिष्ट्य निवेशनीय, तथा च वह्निसाध्यकसद्धेतौ विषयितया वह्नित्वविशिष्टाभावस्य प्रतियोगितावच्छेदकताघटकविषयितया प्रतियोगि-तावच्छेदकविशिष्टज्ञानादिना पर्वतादौ सामानाधिकरण्याभावादव्याप्ति वारणाय साध्यतावच्छेदकनिष्ठावच्छेदकताया साध्यतावच्छेदकताघटक सबन्धावच्छिन्नत्वनिवेशावश्यकतया कथ सयोगादिसबन्धावच्छिन्नप्रमेयत्व निष्ठावच्छेदकताकाभावमादाय लक्षणसमन्वय इति चेन्न, अतिव्याप्ति वारणाय साध्यतावच्छेदकताघटकसबन्धेनैव प्रतियोगितावच्छेदकवैशिष्ट्यस्य निवेश्यत्वात् साध्यतावच्छेदकनिष्ठावच्छेदकताया तत्सबन्धावच्छिन्नत्वा निवेशात् । "लघुरूपसमनियत"ति । प्रमेयवह्नित्वाद्यवच्छिन्नसाध्यक इत्यर्थ, यद्यपि गुरुधर्मस्यावच्छेदकत्व सिद्धान्ते आवश्यकम्, अन्यथा साध्यवन्निष्ठगोत्वाभावीयप्रतियोगिताया लाघवेन गोसमवेतत्वस्यैवावच्छेदक

विवक्षितम् । एतत्कल्पे प्रतियोगिनि वच्छेदकावच्छिन्नभावसामानाधिकरण्य भट्टाचार्यै

भावत्व न निवेशनीयमिति प्रतिपादयति 'एतत्कल्प इति—स्व

[1] यद्यपि भट्टाचार्यै कपिसयोगात्मकाभावस्य दैशिकविशेषणतया हेतुसामानाधि करण्यविरहेण भावभिन्नत्वविरहेण च इति वक्ष्यमाणत्वात् भावभिन्नत्वविशेषणमपि आवश्यक मिति प्रतिभाति तथापि हेतुसामानाधिकरण्ये स्वरूपसबन्धनिवेशेन दोषवारणात् भाव भिन्नत्वनिवेशो अनास्थयोक्तमित्यभिप्राय —स्व

[2] भावभिन्नत्वानिवेशादित्यस्य हेतुसामानाधिकरण्यांशे स्वरूपसबन्धानिवेशादि त्यर्थ —स्व

तया तद्भिन्नगवेतरासमवेतत्वसकलगोवृत्तित्वाभ्यां गोत्वभिन्नाभावस्य याव-
दन्तर्गतस्य गोत्वरूपप्रतियोगिसामानाधिकरण्याभावादसंभवापत्तेः ; तथापि
तत्समनियताभावान्तरमादाय तस्यापि प्रतियोगिसामानाधिकरण्यात् नासंभव
इति तदनावश्यकम् ।

ननु प्रमेयवह्निसाध्यके विषयितया प्रमेयवह्नित्वविशिष्टाभावस्यैव
प्रसिद्धेः नाव्याप्तिः ; न हि वह्नित्वस्यैव तादृशाभावप्रतियोगितावच्छेदकत्वं
संभवति ; प्रमेयवह्न्यविषयकवह्निविषयकज्ञानवति तादृशाभावासत्वप्रसंगात् ;
न च संयोगेन प्रमेयवह्निसाध्यके विषयितया प्रमेयवह्नित्वविशिष्टस्य संयोगेन
योऽभावः तस्य केवलान्वयितया वह्नित्वस्यावच्छेदकत्वेऽपि संयोगेन विषयि-
तया वह्नित्वविशिष्टस्यासत्वादेव नातिप्रसंग इति वाच्यम् ; प्रतियोगितायां
साध्यतावच्छेदकसंबन्धावच्छिन्नत्वस्य प्रयोजनाभावेनानिवेशात् समवायेन
तादृशाभावप्रसिद्धेः । न च प्रमेयत्वविशिष्टात्मत्वसाध्यकईश्वरत्वहेतुके
विषयितया साध्यतावच्छेदकविशिष्टाभावस्य हेतुसामानाधिकरण्याभावेन
व्यधिकरणधर्मावच्छिन्नाभावस्याप्रसिद्धेः अव्याप्तिरिति वाच्यम् ; आत्मत्व-
मात्रविषयकज्ञान-प्रमेयत्वमात्रविषयकज्ञानान्यतरत्वविशिष्टस्य साध्यतावच्छे-
दकरूपेणाभावस्यैव प्रसिद्धेरिति चेन्न ; प्रमेयत्वविशिष्टेश्वरावृत्तिसाध्यक-
ईश्वरत्वहेतुके विषयितया साध्यतावच्छेदकविशिष्टाभावस्य हेतुसामानाधि-
करण्यविरहेण व्यधिकरणधर्मावच्छिन्नाभावमादायातिव्याप्तेः साध्यतावच्छेद-
कनिष्ठावच्छेदकतायां विषयितासंबन्धानवच्छिन्नत्वनिवेशस्यावश्यकतयोक्त-
गुरुधर्मावच्छिन्नसाध्यके तादृशावच्छेदकताकाभावाप्रसिद्ध्या अव्याप्तेर्दुर्वार-
त्वात् ।

"पूर्वोक्तदिशातिव्याप्तेरि"ति । पूर्वक्षणवृत्तित्वविशिष्टस्वाभावरूप-
प्रतियोगिसामानाधिकरण्यमादायातिव्याप्तेरित्यर्थः । ननु पूर्वक्षणवृत्तित्ववि-
शिष्टस्वाभावत्वे तत्प्रतियोगितासमानाधिकरणतत्प्रतियोगितानिरूपकाभावव-

वृत्तितावच्छेदकान्यतत्प्रतियोगितावच्छेदकत्वाभावात् नोक्तातिव्याप्तिरिति चेन्न ; तादृशविवक्षाकल्पे वह्निसाध्यके यावदन्तर्गतवह्नित्वेन महानसीयवह्नि-घटान्यतराभावस्य तादृशप्रतियोगितावच्छेदकाप्रसिद्ध्या अव्याप्तिवारणाय साध्यव्यापकतावच्छेदकरूपावच्छिन्नप्रतियोगितायामपि स्वसमानाधिकरण-स्वनिरूपकाभाववद्वृत्तितावच्छेदकधर्मावच्छिन्ना या या प्रतियोगिता तत्त-दन्यत्वनिवेशावश्यकतया संयोगेन द्रव्यस्य अव्याप्यवृत्तित्वमते धूमाभावस्य लक्षणघटकत्वानुपपत्त्या व्यधिकरणधर्मावच्छिन्नाभावमादायातिव्याप्तेर्वारणाय प्रतियोगिताया अनतिरिक्तवृत्ति सत् यदवच्छेदकमित्येतादृशविवक्षणस्यैवादर-णीयत्वेन पूर्वक्षणवृत्तित्वविशिष्टस्वाभावत्वे तादृशावच्छेदकत्वाक्षतेरतिव्याप्तेर्दु-र्वारत्वात् ; न च तादृशप्रतियोगितावच्छेदकावच्छिन्नाभावसामानाधिकरण्य-निवेशान्नातिव्याप्तिः ; सिद्धान्तेऽपि प्रतियोगितावच्छेदकावच्छिन्ने भावत्व-निवेशस्यावश्यकतया मन्मते तन्निवेशे गौरवविरहादिति वाच्यम् ; सिद्धान्ते तत्प्रतियोगितासमानाधिकरणत्यादिकल्पस्यैवादरणीयतया पूर्वक्षणवृत्तित्वविशि-ष्टस्वाभावत्वरूपप्रतियोगितावच्छेदकावच्छिन्नसामानाधिकरण्यमादायातिव्या-प्त्यप्रसक्तेः तदनावश्यकत्वात् ; किञ्च एतन्मते संयोगेन द्रव्यस्याव्याप्य-वृत्तित्वमते संयोगेन वह्न्यादिसाध्यके साध्यतावच्छेदकसंबन्धघटितव्यापक-ताप्रसिद्ध्यर्थम् साध्यवन्निष्ठाभावे प्रतियोगिवैयधिकरण्यनिवेशावश्यकतया वाच्यत्वसाध्यकेऽपि दर्शितविशिष्टाभावमादाय लक्षणसमन्वयसंभवे प्रति-योग्यवृत्तिश्चेति अन्यानुप्रविष्टिः गौरवं च ।

अत्र यद्यपि स्वप्रतियोगितावच्छेदकसंबन्धघटितव्यापकत्वमिति सिद्धान्तेऽपि व्यधिकरणधर्मावच्छिन्नाभावसंग्रहो न संभवति, संयोगेन वाच्य-त्वाभावस्यापि पूर्वक्षणवृत्तित्वविशिष्टस्वाभावनिष्ठा या स्वप्रतियोगिता तद-वच्छेदकस्वरूपसंबन्धघटितसाध्यव्यापकतावच्छेदकरूपावच्छिन्नप्रतियोगिता-कत्वेन लक्षणघटकतया तस्य च तादृशस्वरूपसंबन्धेन वाच्यत्वत्वरूपप्रति-

सर्वत्र लक्षणसमन्वयात्; न
योगितावच्छेदकावच्छिन्नसामानाधिकरण्यमादाय सर्वत्र लक्षणसमन्वयात्; न
च संयोगेन वाच्यत्वाभावीयप्रतियोगितायाः स्वसमानाधिकरणस्वनिरूपका-
भाववद्वृत्तितावच्छेदकवाच्यत्वत्वावच्छिन्नत्वेन तदन्यत्वविरहात् तादृशाभावस्य
न लक्षणघटकतेति वाच्यम्; स्वनिरूपकाभाववद्वृत्तित्वांशे स्वावच्छेदक-
संबन्धावच्छिन्नत्वनिवेशावश्यकत्वेन तादृशसंयोगेन वाच्यत्वादेरवृत्तेः वाच्य-
त्वत्वस्य तादृशवृत्तितावच्छेदकत्वविरहात्; न चैवं तादृशाभावस्य लक्षण-
घटकत्वेऽपि तत्प्रतियोगितासमानाधिकरणेत्याद्यवच्छेदकत्वस्य वाच्यत्वत्वे-
ऽसंभवेन न तदवच्छिन्नसामानाधिकरण्यमादाय लक्षणयोग इति वाच्यम्;
तत्रापि स्वनिरूपकाभाववद्वृत्तित्वांशे स्वावच्छेदकसंबन्धावच्छिन्नत्वविवक्षाया
आवश्यकत्वेन वाच्यत्वत्वे तादृशावच्छेदकत्वानपायात्; न च स्वनिरूपका-
भाववद्वृत्तित्वांशे स्वावच्छेदकसंबन्धावच्छिन्नत्वनिवेशे वह्न्यादिसाध्यके सत्ता-
सामान्याभावस्यापि लक्षणघटकतया यावदन्तर्गततादृशाभावीयप्रतियोगि-
तानिरूपकाभाववति सामान्यादौ स्वावच्छेदकसमवायसंबन्धेन वृत्तेरप्रसिद्ध्या
तत्प्रतियोगितासमानाधिकरणेत्याद्यवच्छेदकाप्रसिद्ध्या अव्याप्तिरिति वा-
च्यम्; सत्ताभावस्य स्वरूपसंबन्धेन हेतुसामानाधिकरण्याभावेन लक्षण-
घटकत्वविरहादिति पूर्वपक्षोऽवतरति; तथापि व्यधिकरणधर्मावच्छिन्ना-
भावास्वीकारे तत्प्रतियोगितावच्छेदकसंग्रहायोपात्ततत्प्रतियोगितासमानाधिक-
रणेति विशेषणवैयर्थ्यं स्यादिति तदावश्यकता द्वितीयचक्रवर्तिलक्षणवदिति
बोध्यम्; एवं वह्नित्वेन धूमकालावच्छिन्नधूमवद्वृत्तित्वविशिष्टाभावस्य धूमा-
भावसमनियततया तदवच्छेदकवह्नित्वावच्छिन्नसामानाधिकरण्यमादायाति-
व्याप्तिवारणाय प्रतियोगितावच्छेदकतापर्याप्त्यधिकरणमेव तदवच्छेदकेत्यनेन
विवक्षणीयम्; तथा च महानसीयवह्न्यभावस्यातथात्वादव्याप्तिरतो व्यापक-
तावच्छेदकरूपपर्याप्तावच्छेदकताकप्रतियोगिताकाभावस्यैव विवक्षणीयतया न
सर्वत्र विशिष्टाभावमादाय लक्षणसत्वशंकेति ध्येयम्।

"पूर्वोक्तदिशे"ति । "सत्तावान् जाते"रित्यादौ कालिकसंबन्धेन हेतुसमानाधिकरणसत्ताभावमादायेत्यर्थः । ननु भावभिन्नाभावनिवेशे वह्नि-साध्यके घटवृत्तिरूपध्वंसवदन्यत्वाभावस्य कालिकसंबन्धेन हेतुसमानाधिकरणस्य भावरूपप्रतियोगिसामानाधिकरण्याभावादव्याप्तिरत आह—"अस्तु वे"ति । "संयोगध्वंसेने"ति । तत्प्रतियोगितासमानाधिकरणेत्यादिप्रतियोगितावच्छेदकनिवेशाभिप्रायेणेदं; तत्कल्पे प्रतियोगिनि भावत्वत्यागस्योक्तत्वात्; अयोगोलकनाशजन्यसंयोगनाशसंभवस्थलानुरोधेनाह—"अनुयोगिते"ति । वह्निप्रकारकप्रमाविषयत्वादेः कालत्वसंदेहात् कालिकसंबन्धपरित्यागः । "[2]प्रतियोगिवृत्तय"इति । प्रतियोगितावच्छेदकसमानाधिकरणा इत्यर्थः; तेनायोगोलकान्यत्वप्रकारकप्रमाविषयत्वाभावस्य तादृशविषयत्वत्वादिना प्रमेयाभावाभिन्नत्वेन प्रमेयमात्रस्य तत्प्रतियोगित्वेन तादृशाभावस्य प्रमेयरूपप्रतियोगिवृत्तित्वेऽपि नातिव्याप्तिरिति बोध्यम् ।

इति द्वितीयस्वलक्षणम्

---

[1] "संयोगादिध्वंसेने"ति पाठान्तरं दृश्यते—स्व.
[2] "प्रतियोगिवृत्तयः" इति गदाधरीपाठो न दृश्यते—स्व.

श्रीरामचन्द्रपरब्रह्मणे नमः ।

# पट्टाभिरामटिप्पण्यां प्रथमस्वलक्षणम्

श्रीदक्षिणामूर्तिरशेषमर्थं व्यवोधयच्चेतसि मे निषण्ण ।
तत्प्रेरिता मां रसनाग्रमेत्य वाग्वादिनी वादयतु प्रसन्ना ॥

"यत्समानाधिकरणा इत्यादि" तत्प्रतियोगितायां व्यधिकरणधर्मावच्छिन्नत्वनिवेशेनैवोपपत्तौ यत्समानाधिकरणा इति स्वविशिष्टेति च व्यर्थम्; तथा हि साध्यतावच्छेदकावच्छिन्नव्यापकतावच्छेदकप्रतियोगिताका व्यधिकरणधर्मावच्छिन्नप्रतियोगिताका यावन्तोऽभावा यदधिकरणावच्छेदेन प्रतियोगिसमानाधिकरणा· तत्त्वं व्याप्तिः । "वह्निमान् धूमात्" "अयमात्मा ज्ञानात्" "कपिसंयोगाभाववान् मेयत्वादित्यादौ" तादृशस्य व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकस्य साध्याभावस्य हेत्वधिकरणावच्छेदेन प्रतियोगिसमानाधिकरणत्वात् लक्षणसमन्वयः । धूमवान् वह्नेरित्यादौ तादृशस्य घटत्वेन धूमाभावस्य हेत्वधिकरणीभूतायोगोलकान्तर्भावेन धूमाद्यात्मकप्रतियोगिसामानाधिकरण्याभावान्नातिव्याप्तिः । न च धूमाभावस्य धूमत्वेन वह्न्यभावसमनियतत्वेन तदभिन्नतया तादृशाभावस्य अयोगोलकान्तर्भावेनापि वह्निरूपप्रतियोगिसामानाधिकरण्यसत्वात् अतिव्याप्तिरिति वाच्यम्; समनियताभावैक्यपक्षे लक्षणे बहुदोषप्रसक्त्यैव नन्वित्यादिना भट्टाचार्येण द्वितीयलक्षणस्य अवतारयिष्यमाणतया प्रथमलक्षणस्य समनियताभावभेदाभि-

प्रायकत्वावगतेः। भवानन्देन द्वितीयलक्षणावतरणग्रन्थे प्रथमलक्षणस्य सम-नियताभावभेदाभिप्रायकतायाः कण्ठत एव कथितत्वाच्च।

अथ एतल्लक्षणस्य समनियताभावभेदाभिप्रायकत्वे जलादिवृत्तित्व-विशिष्टगोत्वाभावस्याभावस्तु जलत्वाद्यभाव इत्यादिदीधितिग्रन्थविरोधः। तत्र जलवृत्तित्वविशिष्टगोत्वाभावत्वावच्छिन्नप्रतियोगिताकाभावस्य स्वसम-नियतजलत्वाभावाभिन्नत्वोपपादनादिति चेन्न; तत्र हि जलवृत्तित्वविशिष्ट-गोत्वाभावस्य जलत्वाद्यभावरूपत्वव्यवस्थापने न दीधितिकृतामभिनिवेशः। किन्तु धूमाद्यभावरूपताप्रतिक्षेप एव। तथा हि धूमाद्यभावस्यायोगोलकादौ गोत्वाभावरूपप्रतियोगिसामानाधिकरण्यमादाय "धूमवान् वह्नेरि"त्यादौ अतिव्याप्तिप्रसक्त्याऽयं ग्रन्थः प्रवृत्तः तत्र हि जलवृत्तित्वविशिष्टगोत्वाभावा-भावस्य धूमाभावरूपत्वप्रतिक्षेप एव उपयुज्यते। न तु तस्य जलत्वाद्य-भावत्वव्यवस्थापनमपि। ननु तादृशाभावस्य जलत्वाभावरूपत्वे यदि निर्भरो न स्यात् तर्हि अतिसंक्षिप्तलेखननिर्बन्धितार्किकशिरोमणि जलादिवृत्ति-त्वविशिष्टगोत्वाद्यभावस्याभावो न धूमाद्यभाव इत्येव अभिदध्यात्। तस्य जलत्वाद्यभावरूपतावाचकपदं किमिति प्रायुङ्क्त। मैवम्। तस्यापाततो युक्त्यन्तराभिप्रायकत्वात्। तथा हि जलवृत्तित्वविशिष्टगोत्वाभावाभावस्य धूमाभावरूपतापक्षेऽतिरिक्ताभावव्यक्त्यकल्पनाप्रयुक्तलाघवम्। तद्रूपतानभ्यु-पगमे तु गौरवमिति यदि परोऽभिदधीत तदा तं प्रति यदि जलवृत्ति-त्वविशिष्टगोत्वाभावत्वावच्छिन्नाभावस्य किञ्चिद्रूपता वक्तव्येति तवाभि-निवेश तदा तस्य जलत्वाद्यभावरूपतैव वक्तुमुचिता। न तु धूमाद्य-भावरूपता। तथा सति जलादावपि तादृशप्रत्ययप्रसङ्गादिति वक्तव्यम्; अतः तस्य जलत्वाद्यभावरूपतावाचकं प्रायुङ्क्त दीधितिकारः।

ननु सर्वमेतदेवं स्यात् यदि प्रथमलक्षणस्य समनियताभावभेदाभि-प्रायकत्वे बीजं किञ्चित् स्यात्; तदेव तु नेक्षामहे। मैवं— धूम-

वान् वह्नेरित्यादौ धूमत्वेन धूमाद्यभावस्य वह्निधूमोभयत्वेन वह्निधूमोभया-
भावाभिन्नतया अयोगोलकाद्यन्तर्भावेन वह्न्यादिसामानाधिकरण्यमादायाति
व्याप्त्यापत्तेरेव बीजस्य जागरूकत्वात् तदर्थमवगम्यते समनियताभावभेदा
भिप्रायेणैव प्रथमलक्षणमारभ्य वर्णितम् । जलादिवृत्तित्वविशिष्टेत्यनेन ग्रन्थेन
समनियताभावैक्यमङ्गीकृताभिप्राय जातम् , तत समनियताभावैक्यपक्षमा
दाय धूमवान् वह्नेरित्यादावतिव्याप्ति स्मृतिपदमारूढा ततो द्वितीयलक्षण
मनुभूतमिति । अत एव प्रथमलक्षणान्ते एव जलवृत्तित्वविशिष्टेत्यादिना
समनियताभावैक्य स्मारित न तु मध्ये तदिह यदि समनियताभावैक्यमादाय
व्यभिचारिण्यतिव्याप्ति मा प्रत्युद्भाव्यते , तदा यथाश्रुतलक्षणेऽपि तदैक्य-
मादायातिव्याप्ति मयोद्भावनीया । यदि समनियताभावैक्यनिबन्धनो दोष
नात्र लक्षणे उद्भावनीय इति यथाश्रुतलक्षणवादिना समय क्रियते , तदा
तुल्यम् ममापि । दृश्यते चात्र यथाश्रुतात कोऽपि विशेष , यथाश्रुते हि
समवायादिसबन्धावच्छिन्नप्रतियोगिताकवाच्यत्वाद्यभाव घटवृत्तित्वादिविशिष्ट
वाच्यत्वत्वाद्यवच्छिन्नप्रतियोगिताकाभावश्चादायैव लक्षणसङ्गमनात् प्रतियोग्य-
वृत्तिश्चेत्यादिग्रन्थानुत्थितिरूपदोष प्रसज्यते , स चात्र कल्पे नास्तीति यथा
श्रुतादत्र विशेष प्रतिभाति ।

अथ प्रथमलक्षणस्य समनियताभावभेदाभिप्रायकत्वे बहुतरभट्टाचार्य
ग्रन्थसन्दर्भविरोध प्रसज्यते । तथा हि यादृशप्रतियोगितावच्छेदकविशिष्टा
नधिकरण साध्यवत् तादृशप्रतियोगितावच्छेदकत्व व्यापकतावच्छेदकत्वमिति
अस्मिन् परिष्कारे यादृशप्रतियोगितावदनधिकरणत्व विहाय यादृशप्रति
योगितावच्छेदकविशिष्टानधिकरणत्वनिवेशस्य घटाद्यभावाना घटत्वादिना
प्रमेयसामान्याभावाभिन्नत्वमादाय व्यावृत्ति दर्शिता , तच्च विरुध्यते ,
न तु प्रथमलक्षणस्य समनियताभावभेदाभिप्रायकत्वनिर्भरेण तादृशग्रन्थ
प्रवृत्त । किन्तु समनियताभावैक्यपक्षे तद्भेदपक्षे च प्रतियोगितावच्छेदक-

निवेशव्यावृत्तिः भट्टाचार्यैः प्रथमतः तदैक्यपक्षे व्यावृत्तिमाख्याय पश्चात् तद्भेदपक्षे तामाख्यातवान्; अत एव समनियताभावैक्यादित्यनभिधाय समनियताभावैक्यमते इत्युपक्रान्तम्; अत एवानुपदं तादृशाभावानामभेद इति सप्तम्यन्तनिर्देशेन तादृशाभावाभेदस्य विवादत्वं सूचितम् सविवादत्वनिबन्धनादेव स्वरसात् समनियताभावानामभेदाभ्युपगन्तृनयेऽपीत्यादिग्रन्थेन प्रतियोगितावच्छेदकनिवेशव्यावृत्तिरन्यथा दर्शिता। तत्र समनियताभावानभ्युपगन्तृनयेत्विति तु शब्दमप्रयुज्य अपिशब्दं प्रयुञ्जानो भट्टाचार्यः पूर्वकल्पेऽस्वरसम् अत्र कल्पे निर्भरञ्च सूचयतीति चेन्न; एवमपि संयोगादिना द्रव्यत्वाद्यभावस्य स्वसमनियतघटत्वाद्यवच्छिन्नप्रतियोगिताकवह्न्याद्यभावाभिन्नत्वकथनमनुपदमुत्तरत्र विरुध्यते।

यत्समानाधिकरणा इत्यादि अत्र स्वविशिष्टहेत्वधिकरणान्तर्भावेन प्रतियोगिसमानाधिकरणा इतिस्थाने व्यधिकरणधर्मावच्छिन्नप्रतियोगिताका इति वक्तुं युक्तम्; वह्निमान् धूमादित्यादिसद्धेतौ सर्वत्र घटत्वाद्यवच्छिन्नवह्न्यादिनिष्ठतादृशप्रतियोगिताकानां यावतामेवाभावानां व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकत्वात् लक्षणसमन्वयः। धूमवान् वह्नेरित्यादौ व्यभिचारिणि साध्यतावच्छेदकावच्छिन्नसाध्यनिष्ठप्रतियोगिताकाभावस्यापि लक्षणघटकत्वात् तस्य व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकत्वाभावात् नातिव्याप्तिरिति।

ननु सत्तावान् द्रव्यत्वादित्यादौ हेत्वधिकरणे महाकाले कालिकसंबन्धेन वर्तमानस्य सत्तात्वाद्यवच्छिन्नसत्तानिष्ठप्रतियोगिताकाभावस्य व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकाभावादव्याप्तिः। न च स्वप्रतियोगितावच्छेदकावच्छिन्नवत्ताग्रहविरोधितानियामकसंबन्धेन हेत्वधिकरणवृत्तित्वविवक्षणात् नायं दोषः इति वाच्यम्; समवायसंबन्धेन संयोगवत्ताबुद्धेरपि व्याप्यवृत्तित्वग्रहशून्यकालीनायाः संयोगाभाववत्ताबुद्धिप्रतिबन्धकताया भट्टा-

चार्यसम्मततया संयोगाभाववान् मेयत्वादित्यादौ तादृशसमवायसंबन्धेन हेत्वधिकरणवृत्तिसंयोगात्मकाभावस्य व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकत्वाभावेन तथाप्यव्याप्तेरपरिहारात्; स्वरूपसंबन्धेन हेत्वधिकरणवृत्तीनामतथात्वेनाव्याप्तेरनपायात्।

अथ व्यापकतावच्छेदकप्रतियोगितायां साध्यनिष्ठत्वनिवेशात् नायं दोषः। साध्यनिष्ठप्रतियोगिताकस्य संयोगस्य हेत्वधिकरणे स्वरूपसंबन्धेन वृत्तित्वाभावात् हेत्वधिकरणे स्वरूपसंबन्धेन वर्तमानस्य संयोगाधिकरणत्वादेः साध्यनिष्ठप्रतियोगिताकत्वाभावात् व्यधिकरणधर्मावच्छिन्नसाध्याभावस्यैव लक्षणघटकत्वादिति चेन्न; एवमपि संयोगाधिकरणत्वाद्यभावसाध्यकप्रमेयत्वादिहेतौ साध्यनिष्ठप्रतियोगिताकस्य संयोगाधिकरणत्वाद्यात्मकाभावस्य तथात्वादव्याप्तेरपरिहारात्। ननु अभावपदं भावभिन्नपरं; नातः संयोगाधिकरणत्वाद्यात्मकाभावमादाय दोषः; हेत्वधिकरणवृत्तित्वं तु स्वरूपसंबन्धेन; तेन सत्तावान् द्रव्यत्वादित्यादौ कालिकसंबन्धेन हेत्वधिकरणवृत्तिसत्ताभावमादाय न दोषः। साध्यनिष्ठत्वं तु प्रतियोगिताया न निवेशनीयं; प्रयोजनाभावादिति चेन्न; एवमपि संयोगेन द्रव्यस्याव्याप्यवृत्तितया वह्निमान् धूमादित्यादौ वह्नित्वावच्छिन्नवह्न्यभावं संयोगी गुणाद्यन्यत्वविशिष्टसत्वादित्यादौ संयोगत्वावच्छिन्नसंयोगाभावञ्चादायाव्याप्तेः तथापि अपरिहारात् इति। मैवं—साध्यतावच्छेदकावच्छिन्नवन्निष्ठाभावप्रतियोगितानवच्छेदकत्वरूपव्यापकतावच्छेदकत्वगर्भेनिविष्टाभावे प्रतियोगिवैयधिकरण्यस्य प्रयोजनाभावेनानिवेशनीयतया संयोगाभावनिष्ठप्रतियोगितायाः साध्यवन्निष्ठसंयोगाद्यात्मकाभावप्रतियोगितावच्छेदकत्वात् वह्निसंयोगादिनिष्ठप्रतियोगितायाश्च साध्यवन्निष्ठवह्न्यभावाद्यात्मकाभावप्रतियोगितावच्छेदकत्वात् तादृशाभावानां लक्षणघटकत्वाभावात्। अथैवमपि सत्तावान् द्रव्यत्वादित्यादौ हेत्वधिकरणे कालिकसंबन्धेन वर्तमानसत्तात्वावच्छिन्नाभावमादाय दोषस्य स्वरूपसंबन्धेन हेत्व-

धिकरणवृत्तित्वनिवेशेन वारणेऽपि तत्र लक्षणघटकीभूताभावाप्रसिद्धिः । तत्र हि घटत्वेन सत्ताभावो लक्षणघटको वाच्यः; तच्च न संभवति । सत्ताभाव-प्रतियोगित्वावच्छिन्नप्रतियोगिताकाभावस्य सत्ताभावात्मकाभावस्य साध्यवति काले कालिकसंबन्धेन वर्तमानस्य प्रतियोगितावच्छेदकत्वात् सत्ताभावप्रति-योगितायाः । न च घटत्वेन वाच्यत्वाभाव एव सर्वत्र लक्षणघटको भविष्यति तत्प्रतियोगितायाः केवलान्वयितावच्छेदकत्वेन तदवच्छिन्नप्रति-योगिताकाभावाप्रसिद्धेरिति वाच्यम्; तथा सति द्रव्यं सत्त्वादित्यादौ अतिव्याप्तेः व्यतिरेकितावच्छेदकप्रतियोगितामात्रस्यैव साध्यवति महाकाले कालिकसंबन्धेन वर्तमानो योऽभावः तत्प्रतियोगितावच्छेदकतया केवला-न्वयितावच्छेदकीभूतवाच्यत्वादिनिष्ठप्रतियोगिताया एव लक्षणघटकत्वेन तन्निरूपकाभावस्य व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकत्वनियमात् ।

अथ साध्यतावच्छेदकसंबन्धेन साध्यवत्ताज्ञानं प्रति विरोधिता-नियामको यस्संबन्धः तेन संबन्धेन साध्यवन्निष्ठत्वमभावस्य निवेशनीयम्; तेन द्रव्यं सत्त्वादित्यादौ तादृशविशेषणतासंबन्धेन साध्यवन्निष्ठाभावप्रति-योगितानवच्छेदकद्रव्यत्वत्वावच्छिन्नद्रव्यत्वनिष्ठप्रतियोगिताकाभावस्य तथा-त्वान्नातिव्याप्तिरिति चेत्; तर्हि सत्ताभाववान् जात्यभावादित्यादौ साध्यव-त्सामान्यनिरूपिततादृशसमवायसंबन्धावच्छिन्नवृत्तित्वाप्रसिद्ध्या अव्याप्त्या-पत्तेः । ननु विशेषणतासंबन्धेनैव साध्यवन्निष्ठत्वं विवक्षितम् । न चैवं वह्निमान् धूमादित्यादौ पर्वतत्वात्मकाभावीयप्रतियोगितायाः साध्यवति विशेषणतासंबन्धेन वर्तमानो योऽभावः तत्प्रतियोगितावच्छेदकतया पर्वत-त्वात्मकाभावं संयोगाभाववान् मेयत्वादित्यादौ तथाविधसंयोगात्मकाभावच्छा-दायाव्याप्तिरिति वाच्यम्; हेत्वधिकरणे विशेषणतासंबन्धेन तादृशाभावानां लक्षणघटकत्वासंभवादिति चेत्; एवमपि सर्वासामेव प्रतियोगितानां साध्य-वन्निष्ठाभावीयव्यधिकरणसंबन्धावच्छिन्नप्रतियोगितावच्छेदकत्वात् व्यापकता-

वच्छेदकप्रतियोगित्वाप्रसिद्धिः उत्तरत्र पुनरपि व्यापकताघटकसंबन्धग्रहणा-
भावेन भट्टाचार्योपदर्शितरीतेः असंभवदुक्तिकत्वात् ; प्रतियोगितायां साध्यता-
वच्छेदकसंबन्धावच्छिन्नत्वनिवेशे वह्निमान् धूमादित्यादौ साध्यतावच्छेद-
कीभूतसंयोगसंबन्धावच्छिन्नप्रतियोगितानवच्छेदकप्रतियोगित्वाप्रसिद्ध्याव्या-
प्तिः । न च व्यापकताघटकाभावे प्रतियोगिवैयधिकरण्यं निवेश्यते ।
तथा च व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकवह्न्यभावप्रतियोगिनो वह्नेः
संयोगसंबन्धावच्छिन्नप्रतियोगिताकाभावस्य वह्निमति प्रतियोगिव्यधिकरण-
त्वाभावेन तादृशाभावो व्यधिकरणधर्मावच्छिन्नवह्न्यभाव एवेति कथनव्याप्ति-
रिति वाच्यम् ; एवं सति वह्नित्वावच्छिन्नवह्न्यभावीयप्रतियोगिताया अपि
तद्रीत्या व्यापकतावच्छेदकत्वेन तस्य च व्यधिकरणधर्मप्रतियोगिताकत्वा-
भावादव्याप्तेः दुर्वारत्वात् । अत एव स्वावच्छिन्ननिरूपितसाध्यतावच्छेदक-
संबन्धावच्छिन्नाधिकरणतावद्भिन्नसाध्याधिकरणकं यद्यत् स्वं तद्भिन्नव्यापक-
तावच्छेदकत्वमित्यपि निरस्तम् । तादृशवह्नित्वावच्छिन्नवह्निनिष्ठप्रतियोगि-
ताकाभावमादायाव्याप्त्यापत्तेः । अथ साध्यवन्निष्ठाभावीययत्किञ्चित्संबन्धा-
वच्छिन्नप्रतियोगितानवच्छेदकत्वं व्यापकतावच्छेदकत्वम् । वह्निमान् धूमादि-
त्यादौ तादृशसमवायस्वरूपादिसंबन्धावच्छिन्नप्रतियोगितानवच्छेदकीभूतघट-
त्वाद्यवच्छिन्नवाच्यत्वादिनिष्ठप्रतियोगिताकाभावानामेव तथात्वात् लक्षण-
समन्वयः । धूमवान् वह्नेरित्यादौ अयोगोलकान्यत्वत्वेनायोगोलकान्यत्वाभाव-
स्यापि लक्षणघटकत्वात् नातिव्याप्तिरिति चेत् तर्हि ज्ञानवान् आत्मत्वादि-
त्यादौ तादृशाभावीयविषयतासंबन्धावच्छिन्नप्रतियोगितानवच्छेदकीभूतसम-
वायसंबन्धावच्छिन्नज्ञानत्वावच्छिन्नप्रतियोगिताकाभावस्य सुषुप्त्यादिकाला-
वच्छेदेन हेतुसमानाधिकरणस्यातथात्वादव्याप्तेः सर्वत्रैव समवायस्वरूपादि-
संबन्धावच्छिन्नप्रतियोगितानवच्छेदकीभूतकालिकविशेषणताविषयतादिसं-
बन्धावच्छिन्नद्रव्यत्वत्ववाच्यत्वत्वाद्यवच्छिन्नद्रव्यत्ववाच्यत्वादिनिष्ठप्रतियोगि-

ताकस्य लक्षणघटकस्यातथात्वादसंभवस्य वा प्रसक्तेः। अथ लक्षणघटकी-भूताभावप्रतियोगितायां स्वरूपसंबन्धावच्छिन्नत्वनिवेशात् नायं दोषः स्वरूपसंबन्धावच्छिन्नज्ञानत्वावच्छिन्नप्रतियोगिताकाभावस्य स्वरूपसंबन्धा-वच्छिन्नद्रव्यत्वत्वावच्छिन्नप्रतियोगिताकाभावस्य च केवलान्वयित्वेन व्यधि-करणधर्मावच्छिन्नप्रतियोगिताकाभावाभिन्नत्वात् स्वरूपसंबन्धावच्छिन्नवाच्य-त्वाद्यभावस्य च व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकस्यैव लक्षणघटकत्वा-दिति चेत्, एवमपि भगवत्समवेतभेदस्य विषयतासंबन्धेन साध्यतायां नि-त्यज्ञानत्वादिहेतौ विषयतासंबन्धघटितव्यापकतावच्छेदकीभूतस्वरूपसंबन्धा-वच्छिन्नभगवत्समवेतभेदत्वावच्छिन्नप्रतियोगिताकाभावस्य भगवत्समवेतत्व-रूपतया स्वरूपसंबन्धेन हेतुसमानाधिकरणस्यातथात्वादव्याप्तेर्दुर्वारत्वात्। ननु भगवत एव विषयतासंबन्धेन भगवज्ज्ञानसंबन्धितया तन्निष्ठात्यन्ताभावी-यविषयतासंबन्धावच्छिन्नप्रतियोगितैवाप्रसिद्धेति कथं तत्संबन्धघटितव्यापक-तावच्छेदकत्वम् तस्या इति स्वरूपादिसंबन्धघटितव्यापकतावच्छेदकीभूत-प्रतियोगिताकवाच्यत्वाद्यभावस्यैव तत्र लक्षणघटकत्वात् नाव्याप्तिः। न च घटत्वेन पटो विषयतासंबन्धेन नास्तीति प्रतीतिसिद्धाभावीयप्रतियोगितैव तादृशी प्रसिद्ध्यतीति वाच्यम्; तर्हि भगवत्समवेतभेदनिष्ठप्रतियोगित्वेन घटो विषयतासंबन्धेन नास्तीति प्रतीतिसिद्धाभावीयविषयतासंबन्धावच्छिन्न-प्रतियोगितावच्छेदकत्वमेव भगवत्समवेतभेदनिष्ठप्रतियोगितायाः इति कथं तत्संबन्धघटितव्यापकतावच्छेदकत्वं तस्याः। नन्वेवं सति सद्धेतौ सर्वत्र वाच्यत्वादिनिष्ठप्रतियोगितायाः अपि वाच्यत्वादिनिष्ठप्रतियोगित्वेन घटो नास्तीति प्रतीतिसिद्धाभावप्रतियोगितावच्छेदकत्वेन व्यापकतावच्छेदकप्रति-योगित्वाप्रसिद्धिः। न च घटत्वपटत्वाभ्यां किमपि प्रमेयं नास्तीति प्रतीति-सिद्धाभावीयप्रतियोगितैव व्यापकतावच्छेदिका तस्याः केवलान्वयित्वेन तद्व्यधिकरणप्रतियोगित्वाप्रसिद्धेः इति वाच्यम्; तद्रीत्या व्यभिचारिण्यपि

तादृशप्रतियोगिताया एव व्यापकतावच्छेदकत्वापत्त्या अतिव्याप्तेः । अतः साध्यवन्निष्ठाभावीययत्किञ्चित्संबन्धावच्छिन्नप्रतियोगितानिरूपितसामानाधिकरण्यप्रत्यासत्त्यवच्छिन्नावच्छेदकताशून्यत्वमेव व्यापकतावच्छेदकत्वम् । व्यभिचारिणि व्यभिचारनिरूपकाधिकरणान्यत्वनिष्ठप्रतियोगिताया अपि साध्यवन्निष्ठाभावीयविशेषणतासंबन्धावच्छिन्नप्रतियोगितानिरूपितसामानाधिकरण्यप्रत्यासत्त्यवच्छिन्नावच्छेदकताशून्यतया तन्निरूपकाभावस्य व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकत्वविरहात् नातिव्याप्तिरिति वक्तव्यम् । तथा च दर्शितस्थले भगवत्समवेतभेदनिष्ठप्रतियोगितायाः विषयतासंबन्धावच्छिन्नप्रतियोगितायां व्यधिकरणतया अवच्छेदकत्वेऽपि सामानाधिकरण्यप्रत्यासत्त्यवच्छिन्नावच्छेदकताशून्यत्वमक्षतमेवेति चेत्; तत्र विषयतासंबन्धावच्छिन्नप्रतियोगितानिरूपितसामानाधिकरण्यप्रत्यासत्त्यवच्छिन्नावच्छेदकताया एवाप्रसिद्धत्वेन तच्छून्यत्वस्य तादृशप्रतियोगितायां दुरुपपादत्वात् ।

अथ सामानाधिकरण्यप्रत्यासत्त्यवच्छिन्नावच्छेदकत्वं हि तत्प्रतियोगितासमानाधिकरणत्वे सति तत्प्रतियोगितावच्छेदकत्वम् । तथा च विरुद्धघटत्वपटत्वाभ्यां विषयतासंबन्धेन किमपि प्रमेयं नास्तीति सिद्धाभावीया या विषयतासंबन्धावच्छिन्ना प्रतियोगिता तत्समानाधिकरणत्वे सति तदवच्छेदकत्वं घटत्वपटत्वोभये प्रसिद्धम् । घटत्वपटत्वोभयस्य प्रत्येकं प्रतियोगितासमानाधिकरणत्वात् तदवच्छेदकत्वाच्च तच्छून्यत्वं भगवत्समवेतभेदनिष्ठप्रतियोगितायामक्षतमिति चेत्; तर्हि तद्रीत्या भगवत्समवेतभेदनिष्ठप्रतियोगित्वघटत्वाभ्यां विषयतासंबन्धेन किमपि प्रमेयं नास्तीति प्रतीतिसिद्धाभावीया या विषयतासंबन्धावच्छिन्ना प्रतियोगिता तत्समानाधिकरणत्वे सति तदवच्छेदकत्वस्य भगवत्समवेतभेदनिष्ठप्रतियोगितायां सत्त्वेन तच्छून्यत्वरूपं व्यापकतावच्छेदकत्वं तस्या दुर्घटमेवेति ।

वस्तुतस्तु यादृशप्रतियोगितावच्छेदकतापर्याप्त्यवच्छेदकधर्मावच्छिन्न-
स्य तत्प्रतियोगिताधिकरणवृत्तित्वं सैव सामानाधिकरण्यप्रत्यासत्त्यवच्छिन्ना
प्रतियोगितावच्छेदकता । तथा च घटत्वपटत्वाभ्यां किमपि प्रमेयं विषयतया
नास्तीति प्रतीतिसिद्धाभावीयप्रतियोगिताया अपि सामानाधिकरण्यप्रत्या-
सत्त्यवच्छिन्नावच्छेदकत्वाप्रसिद्धिर्दुर्वारेत्यधिकमन्यत्र विवेचनीयमास्ते । तथा
च कथं भगवत्समवेतभेदसाध्यकाव्याप्तिरिति । मैवं—तत्र भगवत्समवेतभेद-
विषयकयत्किञ्चिज्जन्यज्ञानव्यक्तेरपि साध्यवत्तया तन्निष्ठात्यन्ताभावीयविषय-
तासंबन्धावच्छिन्नप्रतियोगितानिरूपितसामानाधिकरण्यप्रत्यासत्त्यवच्छिन्नाव-
च्छेदकतायाः तदविषयीभूतघटादिनिष्ठतद्व्यक्तित्वादौ प्रसिद्धत्वेन तच्छून्यत्व-
स्य भगवत्समवेतभेदप्रतियोगितायामक्षतत्वात् । एवं कालिकसंबन्धेन गगनादेर-
वृत्तितामते महाकालभेदस्य कालिकसंबन्धेन साध्यतायां महाकालत्वादिहेतौ
कालिकसंबन्धघटितव्यापकतावच्छेदकीभूतमहाकालभेदत्वावच्छिन्नस्वरूपसंब-
न्धावच्छिन्नप्रतियोगिताकाभावस्य महाकालत्वरूपस्य स्वरूपसंबन्धेन हेतुसमा
नाधिकरणस्य व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकत्वाभावात् अव्याप्तिः ।
साध्यवन्निष्ठाभावीयकालिकसंबन्धावच्छिन्नप्रतियोगितानिरूपितसामानाधिक-
रण्यप्रत्यासत्त्यवच्छिन्नावच्छेदकताया गगनत्वादौ प्रसिद्धिः । वस्तुतः कालि-
कसंबन्धेन गगनादेःवृत्तित्वेऽपि न क्षतिः । कालिकसंबन्धावच्छिन्नप्रति-
योगिताकगवाद्यभावस्य मन्दुराद्यवच्छेदककाले सत्त्वेन गोत्वादावेव तादृशा-
वच्छेदकताप्रसिद्धेः । यदि च कालिकसंबन्धावच्छिन्नमहाकालभेदनिष्ठप्रति-
योगित्वावच्छिन्नप्रतियोगिताकाभावस्यापि दैशिकसंबन्धेन महाकालभेदानधि-
करणीभूतमहाकालावच्छेदेन महाकालवृत्तितया महाकालभेदनिष्ठप्रतियोगि-
तायाः तादृशावच्छेदकताशून्यत्वं दुर्घटमिति । एवमभावपदस्य भावभिन्न-
परतया महाकालत्वरूपाभावस्य पूर्वोक्तभगवत्समवेतत्वरूपाभावस्य च भाव-
रूपतया लक्षणघटकत्वासंभवेन व्यधिकरणधर्मावच्छिन्नप्रतियोगिताया एव

लक्षणघटकतया नोक्तदूषणद्वयमपीति विभाव्यते; तदापि विषयतासंबन्धेन
पृथिवीसमवेतत्वादेः साध्यतायां पृथिवीसमवेतविषयकजन्यज्ञाननिष्ठतद्व्यक्ति-
त्वादिहेतौ विषयतासंबन्धघटितव्यापकतावच्छेदकीभूतपृथिवीसमवेतत्वत्वाव-
च्छिन्नस्वरूपसंबन्धावच्छिन्नप्रतियोगिताकाभावस्य स्वरूपसंबन्धेन हेतुसमा-
नाधिकरणस्य व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकत्वाभावादव्याप्तिर्दुर्वारा ।
तत्र च ब्रूमः—साध्यवति विशेषणतासंबन्धेन वर्तमानो योऽभावः तदी-
यस्यावच्छेदकसंबन्धावच्छिन्नप्रतियोगितानवच्छेदकत्वं व्यापकतावच्छेदक-
त्वम् । स्वपदं—व्यापकतावच्छेदकत्वेनाभिमतप्रतियोगितापरम् । वह्निमान्
धूमादित्यादौ समवायेन घटत्वेन द्रव्यत्वं नास्तीति सिद्धाभावो लक्षण-
घटकः । कपिसंयोगाभाववान् मेयत्वादित्यादौ कपिसंयोगाद्यात्मकाभाव-
स्य विशेषणतासंबन्धेन हेतुसमानाधिकरणत्वात् वारणम् । व्यापकताव-
च्छेदकत्वेनाभिमतप्रतियोगितायां संबन्धविशेषावच्छिन्नत्वं न निवेशनीयम् ।
प्रयोजनाभावात् । साध्यवति विशेषणतासंबन्धेन वर्तमानो योऽभावः तदीय-
विशेषणतासंबन्धावच्छिन्नप्रतियोगितानवच्छेदकीभूतविशेषणतासंबन्धावच्छि-
न्नप्रतियोगितावच्छेदकविशेषणतासंबन्धेन यत्समानाधिकरणा यावन्तोऽभावाः
व्यधिकरणधर्मावच्छिन्नप्रतियोगिताका इति वा विवक्षणीयम् । एवं च
प्रतियोगिसामानाधिकरण्यघटितलक्षणे व्यधिकरणधर्मावच्छिन्नप्रतियोगिताका-
भावाभ्युपगममन्तरेणापि सर्वत्र वाच्यत्वाद्यभावमादायैव लक्षणसंभवात् प्रति-
योग्यवृत्तिश्चेत्यादिग्रन्थानुत्थितिरिति दोषः प्रसज्यते । लक्षणघटकीभूता-
भावप्रतियोगितायां व्यापकताघटकसंबन्धावच्छिन्नत्वस्य प्रयोजनान्तरविर-
हेणानिवेशादिति । एवं नन्वेवमपीत्यादिद्वितीयलक्षणावतरणिकायां भट्टा-
चार्येण प्रतिपादयिष्यमाणा व्यभिचारिणि समनियताभावैक्यपक्षमादाय धूमा-
द्यभावानां वह्न्यादिरूपप्रतियोगिसामानाधिकरण्यमादाय प्रसक्तातिव्याप्तिरपि
अत्र न प्रसरति । तत्तद्व्यभिचारनिरूपकाधिकरणान्यत्वाद्यवच्छिन्नप्रतियोगि-

ताकानां यावदन्तर्गतानामभावानां प्रतियोगिसामानाधिकरण्यविरहेण व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकत्वविरहेण अस्मदुक्तपरिष्कारेऽतिव्याप्तेरप्रसक्तेः। एतेन लक्षणस्य लक्षणान्तरादूषकत्वात् नायमाक्षेप इति कैश्चिदुक्तं प्रत्युक्तम्। व्यधिकरणधर्मावच्छिन्नाभावाभ्युपगमपक्षे निर्दुष्टस्य प्रकृतोपयुक्तस्य च लक्षणस्य संभवे तदुपेक्ष्य कथंचित् सदोषं लक्षणमादाय सर्वज्ञेन तार्किकशिरोमणिना तादृशाभावखण्डनपरग्रन्थावतरणासंभवादिति। अत्र प्रतिभाति—एतादृशलक्षणकरणे इदं वाच्यं ज्ञेयत्वात् वह्निमान् धूमादित्यादौ सर्वत्र वैशिष्ट्यव्यासज्यवृत्तिधर्मावच्छिन्नवाच्यत्वाद्यभावानामपि यावदन्तर्गततया लक्षणघटकत्वापत्तिः। अथ वैशिष्ट्यव्यासज्यवृत्तिधर्मावच्छिन्नाभावमादाय दोषो द्वितीयलक्षणावतरणिकायां भट्टाचार्येणापि एवं सर्वत्रेत्यादिग्रन्थादाय दोषो ... श्रुतलक्षणे वक्ष्यते इति नायमिदानीमुद्भावनीयः इति चेत्; भ्रान्तोऽसि तत्र तादृशाभावानादायैव लक्षणसमन्वयसंभवात् प्रकृतानुपयोगमात्रं प्रतिपाद्यते। इदानीन्तु यावदन्तर्गतानां तेषां व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकत्वाभावात् असंभव इति। यदि पुनः तादृशाभाववारणाय वैशिष्ट्यव्यासज्यवृत्तिधर्मानवच्छिन्नत्वं प्रतियोगितायां निवेश्यते; नायमसंभवः; भट्टाचार्यस्य तु नैतन्निवेशसंभवः अनतिप्रयोजनकत्वादिति विभाव्यते; तदापि पर्वतान्यत्वेन प्रमेयं नास्तीति प्रतीतिसिद्धाभावीयप्रतियोगिताया अपि निरुक्तव्यापकतावच्छेदकाक्रान्ततया तन्निरूपकाभावस्य हेत्वधिकरणे पर्वतादौ वर्तमानस्य व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकत्वाभावात् असंभव इत्यादिरीत्या सुदूरं परमालोचनीयम्।

येन येन संबन्धेन स्वप्रतियोगित्वावच्छिन्नस्य साध्यतावच्छेदकावच्छिन्नव्यापकता तेन तेन प्रतियोगिसामानाधिकरण्यमभावस्य विवक्षणीयम्। अन्यथा इदं नित्यज्ञानं नित्यत्वे सति सविषयकत्वादित्यादौ हेतुसमानाधिकरणनित्यज्ञानत्वाद्यभावप्रतियोगिनः साध्यं प्रति विषयतासंबन्धे-

नापि व्यापकतया तेन सबन्धेन हेत्वधिकरणेश्वरेच्छाकृत्यो प्रतियोगिसामा नाधिकरण्येनातिव्याप्ते । यन येनेत्युक्तौ च तथाविधसमवायेनातथात्वान्ना तिव्याप्तिरिति लिखित भट्टाचार्येण ।

अत्र विचार्यते—विषयितासबन्धस्य दर्शितस्थले व्यापकताघटकत्व सभव एव हि तेन सबन्धेन प्रतियोगिसामानाधिकरण्यमादायातिव्याप्ति प्रसज्यते । तदेव न सभवति । तथा हि साध्यवत्यकिञ्चिद्वृत्त्यस्यसबद्धत्व विशिष्टसामान्यकभिन्नत्व—व्यापकतावच्छेदकत्वमिति निष्कृष्ट प्राक् । तत्र च सबद्धत्वशरीरे व्यापकताघटकत्वेन अभिमतो य सबन्ध स एव दर्शनीय इत्युक्त भट्टाचार्येणैव प्राक् । इत्थ च इद नित्यज्ञान नित्यत्वे सति स विषयकत्वादित्यादौ साध्यवति नित्यज्ञाने यद्विशिष्टसामान्य विषयिता सबन्धेनासबद्ध तादृश स्वमेवाप्रसिद्धम् । सर्वस्यैव विषयितासबन्धेन भगव ज्ज्ञानसबन्धित्वात् । अथ मास्तु येन येनेत्यस्य इद नित्यज्ञान नित्यत्वे सति सविषयकत्वादित्यत्र व्यावृत्ति , तथापि स्वरूपसबन्धेन जन्यत्वसाध्यके महाकालान्तर्भावेन व्यभिचारिणि कालत्वादिहेतौ आदिपदग्राह्ये तद्व्यावृत्ति सभवत्येव । तत्र हेतुसमानाधिकरणजन्यज्ञानत्वाद्यभावप्रतियोगिन साध्य प्रति कालिकसबन्धेनापि व्यापकतया तेन सबन्धेन हेत्वधिकरणमहाकाले प्रति योगिसामानाधिकरण्यात् । तत्र हि कालिकसबन्धेन गगनादेरवृत्तित्वपक्षे कालिकसबन्धेन साध्यवत्यकिञ्चिद्वृत्त्यस्यसबद्धत्वविशिष्टसामान्यक गगन त्वादिकमेव प्रसिद्ध्यति । कालिकसबन्धेन तादृशव्यक्त्यसबद्धत्वविशिष्ट सामान्यक प्रसिद्ध्यतीति अतिव्याप्ति प्रसज्यत । येन येनेत्युक्तौ च तथाविधस्वरूपसबन्धेनातथात्वान्नातिव्याप्तिरिति चेत्, न हि वय यन येनेत्यस्य निष्प्रयोजनतामाचक्ष्महे यन तदुत्तर स्यात् , किन्तु इद नित्यज्ञान नित्यत्वे सति सविषयकत्वादित्यत्र विषयितासबन्धस्य व्यापकताघटकत्व मादायातिव्याप्तिरिति यदभिहित तदसभवदुक्तिकमित्यत्रैवास्माकमाग्रह ।

ननु नित्यज्ञानमित्यत्रातिव्याप्तौ अनिर्भरादेव आदौ इत्यभिहितवान्
भट्टाचार्य इति का अनुपपत्तिरिति चेत्; संभवत्येवं यदि कथञ्चिदपि
नित्यज्ञानत्वसाध्यकेऽतिव्याप्तिः संभवदुक्तिका स्यात्। एवं खलु ग्रन्थकृतां
फणितिरुपपादनीया यदेकधारीत्या प्रथममुद्भावितहेतौ दोषमुपपाद्य पश्चात्
प्रकारान्तरेण तद्दोषवारणे सति आदिपदग्राह्यस्थलान्तरानुसरणमिति। न
हि असंभवदुक्तिकदोषप्रसक्तिकल्पनं प्रथममुद्भाव्य पश्चात् संभवदुत्तरं स्थ-
लान्तरं सूचयन्ति ग्रन्थकर्तारः; अन्यथा समवायेन वह्नेः साध्यत्वे वह्निमान्
धूमादित्यादौ हेतुसमानाधिकरणवह्न्यभावप्रतियोगिनः साध्यं प्रति संयो-
गादिसंबन्धेन व्यापकतयैरयेव किं नाभिदध्यात्। उक्तस्थले विषयता-
संबन्धस्यैव दर्शितस्थले संयोगसंबन्धस्यापि व्यापकताघटकतया संभवदुक्ति-
कत्वेऽपि क्षतिविरहात्; आदिपदग्राह्यस्थल एव येन येनेत्यस्य व्यावृत्ति-
संभवात् तस्मात् इदं नित्यज्ञानमित्याद्यपरिचितस्थलविशेषमन्विष्यतो भट्टा-
चार्यस्य किञ्चिदाकूतमिति न जानीमहे। अथ जगत्प्रसिद्धव्यापकता-
वच्छेदकत्वस्य प्रकृतलक्षणघटकत्वाभिप्रायेण नित्यज्ञानत्वसाध्यकेत्यभिधानम्
स्वपरिष्कृतव्यापकतावच्छेदकत्वस्य लक्षणघटकत्वाभिप्रायेण च जन्यत्वसाध्य-
कोक्तहेतुसंग्राहकादिपदाभिधानं संगमनीयम् प्रसिद्धव्यापकतावच्छेदकत्वन्तु
साध्यवन्निष्ठाभावीयप्रतियोगितानवच्छेदकत्वम्। न चात्र कल्पेऽपि नित्य-
ज्ञानत्ववन्निष्ठाभावीयविषयितासंबन्धावच्छिन्नप्रतियोगित्वाप्रसिद्ध्या विषयिता-
संबन्धस्य व्यापकताघटकत्वं दुर्वारमिति वाच्यम्। नित्यज्ञानेऽपि विष-
यितासंबन्धेन घटत्वेन घटो नास्तीति प्रतीतिसिद्धाभावीयप्रतियोगिताया एव
तादृश्याः प्रसिद्धत्वेन तस्य व्यापकताघटकत्वसंभवादिति चेत्; तर्हि नित्य-
ज्ञाने नित्यज्ञानत्ववन्निष्ठप्रतियोगित्वेन विषयितासंबन्धेन घटो नास्तीत्या-
दिप्रतीतिसिद्धाभावीयप्रतियोगितामादाय नित्यज्ञानत्ववन्निष्ठप्रतियोगिताया
अपि विषयितासंबन्धघटितव्यापकतावच्छेदकत्वानुपपत्तेः साध्यवन्निष्ठाभावी-

यप्रतियोगितानिरूपितावच्छेदकतायां सामानाधिकरण्यप्रत्यासत्त्यवच्छिन्नत्व-
निवेशात् तादृशावच्छेदकताशून्यत्वरूपं व्यापकतावच्छेदकत्वं तस्याः सुल-
भमेवेति चेत्; तर्हि साध्यवन्निष्ठाभावीयविषयितासंबन्धावच्छिन्नप्रतियोगिता-
निरूपितसामानाधिकरण्यप्रत्यासत्त्यवच्छिन्नावच्छेदकत्वाप्रसिद्धिः।

अथ घटत्वपटत्वाभ्यां किमपि प्रमेयं विषयितासंबन्धेन नास्तीति
प्रतीतिसिद्धाभावीयप्रतियोगितानिरूपितावच्छेकतैव तादृशी प्रसिद्धा; घटत्व-
पटत्वोभयस्य प्रत्येकं तत्प्रतियोगितासमानाधिकरणत्वात् तत्प्रतियोगितावच्छे-
दकत्वाच्च। नन्वेवं सामानाधिकरण्यप्रत्यासत्त्यवच्छिन्नत्वं न तत्प्रतियोगिता-
वच्छेदकतायाः घटत्वपटत्वोभयत्वावच्छिन्नस्य सामानाधिकरण्यप्रत्यासत्त्य-
वच्छेदकत्वाभावादिति चेत्; किमिदं सामानाधिकरण्यप्रत्यासत्त्यवच्छिन्ना-
वच्छेदकत्वम्। न तावत् सामानाधिकरण्यसंबन्धावच्छिन्नत्वम्। घटाभावीय-
प्रतियोगितायां घटत्वस्य समवायेनैवावच्छेदकत्वेन तत्प्रतियोगितावच्छेदकता-
याः सामानाधिकरण्यसंबन्धानवच्छिन्नतया व्यापकतालक्षणघटकत्वानुपपत्तेः।
वह्न्यादिनिष्ठप्रतियोगितानिष्ठस्वरूपसंबन्धावच्छिन्नावच्छेदकताकघटादिनिष्ठ-
प्रतियोगिताया इव वह्न्यादिनिष्ठप्रतियोगितानिष्ठसामानाधिकरण्यसंबन्धावच्छि-
न्नावच्छेदकताकघटादिनिष्ठप्रतियोगिताया अपि व्यधिकरणधर्मावच्छिन्नायाः
प्रसिद्ध्या तदीयसामानाधिकरण्यसंबन्धावच्छिन्नावच्छेदकताश्रयीभूतायाः
वह्न्यादिनिष्ठप्रतियोगितायाः लक्षणघटकत्वानुपपत्तेश्च। किन्तु तत्प्रतियोगि-
ताश्रयानुयोगिकत्वोपलक्षितसंबन्धावच्छिन्नत्वमेव सामानाधिकरण्यप्रत्यासत्त्य-
वच्छिन्नत्वं तच्च घटत्वपटत्वोभयनिष्ठावच्छेदकतायामपि अक्षतम् घटत्वपटत्वो-
भयस्य समवायसंबन्धेन प्रतियोगितावच्छेदकत्वमित्यस्य व्यधिकरणधर्मा-
वच्छिन्नाभावप्रारम्भो भट्टाचार्येणैव उक्तः। समवायसंबन्धे च तत्प्रतियोगि-
ताश्रयीभूतप्रमेयानुयोगिकत्वस्याक्षतत्वात्। नन्वेवं सति वह्न्यभावप्रति-
योगितानिष्ठसामानाधिकरण्यसंबन्धावच्छिन्नावच्छेदकताकघटादिनिष्ठप्रति-

योगितायाः वह्न्यभावादिप्रतियोगितानिष्ठस्वरूपसंबन्धावच्छिन्नावच्छेदक-
ताकघटादिनिष्ठप्रतियोगितायाश्च वारणं शक्यम्। सामानाधिकरण्यसंबन्धे
स्वरूपसंबन्धे च तत्प्रतियोगिताश्रयीभूतघटानुयोगिकत्वस्याक्षतत्वात्। कि-
ञ्चिन्निरूपितसामानाधिकरण्यस्वरूपसंबन्धयोः घटे सत्त्वादिति चेन्न; तत्प्रति-
योगिताश्रयानुयोगिकत्वस्वाश्रयप्रतियोगिकत्वोभयोपलक्षितसंबन्धावच्छिन्नत्वस्य
विवक्षितत्वात्। स्वम्—अवच्छेदकता। तथा च वह्न्यादिप्रतियोगिताप्रति-
योगिकत्वपटाद्यनुयोगिकत्वयोरुभयोः कुत्रापि स्वरूपसंबन्धे अभावान्न उक्त-
दोषः। घटत्वपटत्वोभयनिष्ठा या अवच्छेदकता तदाश्रयीभूतप्रत्येकप्रतियोगि-
त्वतत्प्रतियोगिताश्रयीभूतप्रमेयानुयोगित्वयोः एकत्र संबन्धे संभवेन तदव-
च्छिन्नप्रतियोगिताया व्यापकताघटकत्वोपपत्तिः। न च वह्निमान् धूमादि-
त्यादौ साध्यवन्निष्ठो यो वह्न्यादिप्रतियोगितानिष्ठविषयितासंबन्धावच्छिन्ना-
वच्छेदकताकज्ञानादिनिष्ठसंयोगसंबन्धावच्छिन्नप्रतियोगिताकाभावः तत्प्रति-
योगितानिरूपिता या तत्प्रतियोगिताश्रयीभूतज्ञानानुयोगिकत्वस्वाश्रयीभूत-
वह्न्यादिप्रतियोगिताप्रतियोगिकत्वोभयोपलक्षितविषयितासंबन्धावच्छिन्नाव-
च्छेदकता तदाश्रयत्वात् वह्न्यादिप्रतियोगितायाः लक्षणघटकत्वानुपपत्त्या
तत्प्रतियोगिताश्रयानुयोगिकत्वस्वाश्रयप्रतियोगिकत्वोभयोपलक्षितविषयितासंब-
न्धावच्छिन्नावच्छेदकता तदाश्रयत्वात् वह्न्यादिप्रतियोगितायाः लक्षणघटक-
त्वानुपपत्त्या तत्प्रतियोगिताश्रयानुयोगिकत्वस्वाश्रयप्रतियोगिकत्वोभयोपलक्षि-
तस्वरूपसंबन्धावच्छिन्नत्वमेव लक्षणे निवेश्यम्। तथा च घटत्वपटत्वोभय-
निष्ठावच्छेदकतामादाय उपदर्शितस्थले प्रसिद्धिः घटत्वादेः स्वरूपसंबन्धा-
भावादिति वाच्यम्। तथापि घटत्वप्रकारकप्रमाविशेष्यतात्वपटत्वप्रकारक-
प्रमाविशेष्यतात्वाभ्यां विषयितासंबन्धेन किमपि प्रमेयं नास्तीति प्रतीति-
सिद्धाभावीयप्रतियोगितावच्छेदकतामादायैव प्रसिद्ध्युपपादनसंभवादिति।
मैवं—तद्रीत्या वह्न्यभावप्रतियोगित्वघटत्वप्रकारकप्रमाविशेष्यत्वत्वाभ्यां संयो-

गसंबन्धेन किमपि प्रमेयं नास्तीति प्रतीतिसिद्धाभावीयसंयोगसंबन्धावच्छिन्न-
प्रतियोगितानिरूपितनिरुक्तस्वरूपसंबन्धावच्छिन्नावच्छेदकताश्रयत्वेन वह्न्या-
दिप्रतियोगिताया लक्षणघटकत्वानुपपत्तेः । नित्यज्ञानत्वाभावीयप्रतियोगित्व-
घटत्वप्रकारकप्रमाविशेष्यत्वत्वाभ्यां विषयितासंबन्धेन किमपि प्रमेयं नास्तीति
प्रतीतिसिद्धाभावीयविषयितासंबन्धावच्छिन्नप्रतियोगितानिरूपितनिरुक्तस्व-
रूपसंबन्धावच्छिन्नावच्छेदकताश्रयत्वेन नित्यज्ञानत्वादिनिष्ठप्रतियोगिताया
विषयितासंबन्धघटितव्यापकतावच्छेदकत्वस्य तथापि दुरुपपादत्वाच्च । न च
यथोपदर्शितप्रतियोगितावच्छेदकतापर्याप्त्यनधिकरणत्व व्यापकतावच्छेदकत्व-
मिति विवक्षया नोक्तदोषद्वयम् उपदर्शितावच्छेदकताया उभयत्रैव पर्याप्ततया
केवलप्रतियोगिताया तत्पर्याप्त्यधिकरणत्वाभावादिति वाच्यम् । तथा सति
वह्निमान् धूमादित्यादौ घटाद्यभावीयप्रतियोगिताया अपि लक्षणघटकत्वा-
पत्ते । तथा हि वह्न्यादिमन्निष्ठाभावप्रतियोगितावच्छेदकत्व यद्यपि घटा-
भावीयप्रतियोगिताया वर्तते तथापि तादृशावच्छेदकतापर्याप्ति न केवल
प्रतियोगितात्वविशिष्टे तथा सति वह्निमनि प्रतियोगी नास्तीति बुद्ध्यापत्ते ।
नापि घटादिनिष्ठप्रतियोगिताव्यक्तौ , स्वरूपतोऽवच्छेदकतापर्याप्तिरस्वीक्रियते
नात प्रतियोगी नास्तीति बुद्ध्यापत्ति । तादृशप्रतीत्या प्रतियोगितात्ववि
शिष्टे अवच्छेदकतापर्याप्त्यवगाहनात् इत्यपि युक्तम् । प्रतियोगितायाः
स्वरूपतो मानाभावेन प्रतियोगिताया स्वरूपतो अवच्छेदकत्वस्य भट्टा-
चार्येणैव बहुश प्रतिक्षेप्यत्वात् किन्तु घटाद्यभावीयप्रतियोगिताविशिष्टे
घटादिनिष्ठप्रतियोगितात्वविशिष्टे तत्तत्प्रतियोगिताव्यक्तित्वविशिष्टे तादृशा-
वच्छेदकताया पर्याप्ति घटाभावप्रतियोगी नास्ति घटनिष्ठप्रतियो-
गितावान्नास्ति तत्तत्प्रतियोगितावान्नास्ति इत्येव प्रतीते । तथा च घटा-
भावीयत्वाद्यन्तर्भावेनैव तादृशावच्छेदकताया पर्याप्त्या घटादिनिष्ठाया
प्रतियोगिताव्यक्ते तत्पर्याप्त्यनधिकरणत्वेन तादृशप्रतियोगिताया अपि

लक्षणघटकत्वापत्तौ तन्निरूपकाभावस्य यावद्धेत्वधिकरणान्तर्भावेण प्रति-
योगिसामानाधिकरण्याभावादसंभव इति । अथ तादृशावच्छेदकतापर्याप्त्य-
नधिकरणस्वप्रतियोगितात्वविशिष्टका यावन्तोऽभावा इति विवक्षणीयम् ।
स्वपदं लक्षणघटकत्वेनाभिमताभावपरम् । अतो न घटादिनिष्ठप्रतियोगि-
ताया लक्षणघटकत्वापत्तिः । घटाभावीयप्रतियोगितात्वविशिष्टस्य तादृशा-
वच्छेदकतापर्याप्त्यधिकरणत्वादिति चेदस्तु तथा; एवमपि एतादृशव्यापक-
तावच्छेदकताया स्वयं दूषितत्वेन स्वपरिष्कृतव्यापकतावच्छेदकत्वनिवेश-
पक्षे येन येनेत्यस्य व्यावृत्त्यलाभात् । न च तत्कल्पे आदिपदमाद्यजन्यत्व-
साध्यककालत्वहेतौ व्यापकताघटककालिकसंबन्धेन प्रतियोगिसामानाधिक
रण्यमादाय दोषवारणाय येन येनेत्यस्य व्यावृत्तिरुक्तैवेति वाच्यम् । तत्रापि
व्यावृत्तेः विचारासहत्वात् । तथा हि तत्र महाकालाविषयकयावज्जन्य
विषयकयत्किञ्चित्प्रमात्वकत्वाभावोऽपि विषयतासंबन्धघटितव्यापकतावच्छेदव
प्रतियोगिताकतया लक्षणघटकः । तस्य च महाकाले व्यापकताघटकविषयत
संबन्धेन प्रतियोगिसामानाधिकरण्यम् कालिकसंबन्धस्तु तत्प्रतियोगिनि
व्यापकताघटको न भवति । तत्प्रमात्व्यक्तेः कालिकसंबन्धेन स्वसमा
कालीनजन्यासंबद्धत्वात् । एतेन यद्धर्मावच्छिन्नवति येन संबन्धेन यद्धर्मा-
वच्छिन्नसत्त्वं तद्धर्मावच्छिन्ननिरूपिततत्संबन्धघटितव्यापकतावच्छेदकत्वं तद्ध-
र्मस्येति तार्किकी रीतिमनुरुध्य नित्यज्ञानत्वसाध्यकस्थलमुदाहृतम् । स्व-
परिष्कृतव्यापकतावच्छेदकत्वनिवेशे तु स्थलान्तरगवेषणीयमित्यभिप्रायेणादि-
पदं प्रयुक्तमिति नासङ्गतिरित्यपि परास्तम् । तादृशस्थलान्तरानुकलनात् न
हि स्वयमुपरितनपदपरिष्कृतवर्त्मना कथमपि असंभवदुक्तिकप्रयोजनकं येन
येनेत्यादिरीतिमनुरुध्य केवलं निवेशयितुमुचितम् भट्टाचार्येण । यदि तु
स्थलान्तरे वा तद्विशेषणं सार्थकं स्यात् तदा ग्रन्थस्य कथञ्चित् लौकिक-

रीत्यनुरोधितया सङ्गमनं युज्यते । तदेव तु नेक्षामहे । अत्र प्रतिभाति—
तद्रूपाभाववदित्याकारिका तद्रूपाश्रयीभूतघटव्यक्त्यविषयिणी तद्रूपाभाववत्त्व-
रूपसामान्यलक्षणजन्या तद्रूपाभाववत्त्वप्रकारेण तद्रूपाश्रयीभूतघटव्यक्तिभिन्न-
निखिलजगद्विषयिणी तद्रूपाश्रयीभूतघटव्यक्त्यसमानकालीना च या काचित्
जन्यज्ञानव्यक्तिः पक्षः तज्ज्ञानव्यक्तीतरभेदः साध्यं तज्ज्ञानव्यक्तिभगव-
ज्ज्ञानान्यतरत्वं हेतुः तत्र भगवज्ज्ञानान्तर्भावेण व्यभिचारिणि हेतावति-
व्याप्तिवारणाय येन येनेत्यावश्यकम् । तत्र हेतुसमानाधिकरणज्ञानव्यक्ती-
तरभेदाद्यभावप्रतियोगिनः साध्यं प्रति विषयतासंबन्धेनापि व्यापकत्वात् ।
विषयितासंबन्धेन साध्यवदसंबद्धस्वविशिष्टसामान्यकं तद्रूपाश्रयीभूतघटादि-
निष्ठतद्व्यक्तित्वमेव प्रसिद्धम् । तादृशज्ञानव्यक्तेः तद्घटव्यक्त्यविषयकत्वात्
एतदर्थमेव हि तद्रूपाश्रयीभूतघटव्यक्त्यविषयिणीत्यन्तं लक्षणघटकीभूतनि-
खिलाभावप्रतियोगिनामेव विषयितासंबन्धेन साध्यव्यापकत्वसंपत्तये सामान्य-
लक्षणाप्रत्यासत्तिजन्यत्वमात्रस्य तद्रूपाश्रयीभूतघटव्यक्तिभिन्ननिखिलजगद्विष-
यकत्वमभिहितम् । तादृशज्ञानव्यक्तेः तद्रूपाश्रयीभूतसमानसमानकालीनत्वे
साध्यं प्रति तद्घटस्य कालिकसंबन्धेन व्यापकतया कालिकसंबन्धघटितसा-
ध्यव्यापकतावच्छेदकप्रतियोगिताकस्य तद्घटाभावस्य भगवज्ज्ञानान्तर्भावेन
व्यापकताघटककालिकसंबन्धेन प्रतियोगिसामानाधिकरण्याभावात् नाति-
व्याप्तिः प्रसज्यते । विषयितासंबन्धस्तु तद्घटनिष्ठव्यापकताघटको न भवति
साध्यवत्त्वात् तज्ज्ञानव्यक्तौ विषयितासंबन्धेन तद्घटस्यासत्त्वात् । अतः
तद्घटस्य कालिकसंबन्धेन साध्यव्यापकतावारणाय तद्रूपाश्रयीभूतघटव्यक्त्य-
समानकालीनेत्युक्तम् । इत्थं च हेतुसमानाधिकरणाना निखिलानामेवा-
भावानां स्वविशिष्टयावद्धेत्वधिकरणान्तर्भावेन स्वप्रतियोगिनिष्ठव्यापकता-
घटकविषयितासंबन्धेन प्रतियोगिसमानाधिकरणत्वात् अतिव्याप्तिः । येन
येनेत्युक्तौ च तद्व्यक्तीतरभेदाद्यभावानां तथाविधविशेषणताविशेषादिना

प्रतियोगिसामानाधिकरण्याभावात् नातिव्याप्तिरिति । इद च भट्टाचार्य दर्शितस्थलसजातीयमेवातिव्याप्त्युपादानरीतिरपि तदीयोपपदानरीतिसजातीयैव । तथा हि भट्टाचार्येण निखिलविषयकस्य नित्यज्ञानस्य पक्षत्वमादृतम् । य तु यत्किञ्चिद्घटमात्राविषयकनिखिलविषयकजन्यज्ञानस्य एव तेन सर्व विषयिण्यो भगवदिच्छाकृत्यो व्यभिचारनिरूपकाधिकरणत्वमादृतम् । मया तु तादृशभगवज्ज्ञानस्य एव विषयितासबन्धेन प्रतियोगिसामानाधिकरण्य मादायातिव्याप्तिप्रसक्तिरपि उभयत्र समा । तदिह लौकिकीं रीतिमनुरुध्य नित्यज्ञानत्वसाध्यकस्थलमुदाहृतम् । स्वपरिष्कृतव्यापकतावच्छेदकत्वनिवेशे तु सजातीयस्थलान्तर गवेषणीयमित्यभिप्रायेणादिपद प्रयुक्तवान् भट्टाचार्य इति सारम् ।

साध्यवत्यत्किञ्चिद्व्यक्त्यसबद्धस्वविशिष्टसामान्यक यद्यत् स्व तत्तदन्यत्वमेव व्यापकतावच्छेदकत्वमित्यभिहित भाट्टाचार्येण ।

नन्वत्र साध्यवद्व्यक्तौ यत्किञ्चित्वविशेषण व्यर्थम्, सामान्यत साध्यवदसबद्धस्यैव निवेशयितुमुचितत्वात् । वह्निमान् धूमादित्यादौ साध्य वदसबद्धस्वविशिष्टसामान्यक यद्यत्स्व जलत्वप्रकारकप्रमाविशेष्यतात्वादि तद्भिन्नत्वस्य वह्न्याद्प्रितियोगिताया सत्त्वेन लक्षणसमन्वयात् । न च इद वाच्य ज्ञेयत्वादिरयत्र सामान्यत साध्यवदसबद्धस्वविशिष्टसामान्यक स्वमप्रसिद्धम् । तत्र हि तादृश स्व घटत्वप्रकारकप्रमाविशेष्यतात्वादीति वक्तव्यम् । तच्च न सभवति । तद्विशिष्टस्य साध्यवदसबद्धत्वाभावात् । यत्किञ्चित्पदोपादाने च तद्विशिष्टस्य पटाद्यसबद्धत्वात् तादृश स्व घटत्वप्रकारकप्रमाविशेष्यतात्वादीति वाच्यम् । तत्र व्यापकतावच्छेदकत्वेनाभिमतो य स्वरूपादि तेन सबन्धेन साध्यवदसबद्धस्वविशिष्टसामान्यकस्य गगनत्वादेरव प्रसिद्धत्वात् । मैव— तथा सति घटत्वप्रकारकप्रमाविशेष्यत्वादिनिष्ठप्रतियोगिताया अपि तादृश गगनत्वादिभिन्नतया लक्षणघटकत्वापातात् । एव वह्निमान् धूमादित्यादौ

पर्वतीयवह्न्याद्यभावानां लक्षणघटकत्वापत्तिवारणाय यत्किञ्चित्वनिवेशाव-
श्यकत्वात् अन्यथा तदीयप्रतियोगिताविशिष्टस्य साध्यवदसंबद्धत्वाभावेन
लक्षणघटकत्वापातात्। यत्किञ्चित्वनिवेशे तु तादृशप्रतियोगिताविशिष्टस्य
तथाविधमहानसादियत्किञ्चिद्व्यक्त्यसंबद्धत्वात् न तदभावस्य लक्षणघटकतेति
स्यादेतत्। स्वविशिष्टसामान्यकमित्यत्र सामान्यपदं व्यर्थम्। न चैवं
वह्निमान् धूमादित्यत्र घटत्वाद्यवच्छिन्नवह्न्यादिनिष्ठप्रतियोगिताया लक्षण-
घटकत्वं न स्यात् तद्विशिष्टस्य पर्वतीयवह्नेः महानसादिरूपसाध्यवत्यत्किञ्चि
द्व्यक्त्यसंबद्धत्वात् इति वाच्यम्। तादृशप्रतियोगिताया लक्षणाघटकत्वेऽपि
क्षतिविरहात्। घटत्वाद्यवच्छिन्नद्रव्यत्वादिनिष्ठप्रतियोगितामादायैव लक्षण-
संभवात्; धूमवान् वह्नेरित्यादौ धूमत्वाद्यवच्छिन्नधूमादिनिष्ठप्रतियोगिताया
लक्षणघटकत्वाभावेऽपि एकव्यक्तिभूतायोगोलकभेदादिप्रतियोगितामादायै-
वातिव्याप्तिवारणसंभवात्। ननु यथोक्तव्यापकतावच्छेदकत्वप्रवेश एव भट्टा-
चार्यस्य निर्भरः। न तु तद्घटकसामान्यपदप्रवेशावश्यकत्वेऽपि किन्त्व-
नावश्यकलक्षणघटकताकानामपि वह्न्यादिप्रतियोगिताना ग्राहकतया संपाता-
यातमुपरञ्जकविशेषणम्। वस्तुतः परित्याज्यमेव तत्प्रयोजनस्य भट्टाचार्येण
स्वयमकथनाच्च ग्रन्थसन्दर्भविरोधः। न हि ग्रन्थकृल्लिखिता यावतामेव
पदाना प्रयोजनमभिधातव्यमिति नियमोऽस्ति। किन्तु संभाविताना यत्पदस्य
प्रयोजनं ग्रन्थकृल्लिखितम् तदेव तु यथाकथञ्चित् समर्थनीयमिति। मैवं—
विचारासहत्वात्। तथा हि साधनसमानाधिकरणगोत्वाद्यभावस्येत्यादि दीधि-
तिव्याख्यानानुपदं साध्यतावच्छेदकावच्छिन्नव्यापकतावच्छेदकत्वं च साध्य-
तावच्छेदकावच्छिन्नसाध्यवन्निष्ठाभावप्रतियोगितानवच्छेदकत्वमित्युक्त्वा तदु-
परि किञ्चिद्विचार्य तदुपरि अथेत्यादिना निरुक्तव्यापकतावच्छेदकतानिवेशे
तु कपिसंयोगाभाववान् मेयत्वादित्यत्र स्वविशिष्टपदव्यावृत्तिवर्णनपरमावि-
दीधितिग्रन्थविरोधः। कपिसंयोगाभावनिष्ठप्रतियोगितायाः साध्यवन्निष्ठा-

भावप्रतियोगितावच्छेदकत्वात् प्रकृतव्यापकताशरीरे प्रतियोगिवैयधिकरण्य-
निवेशे प्रयोजनविरहादित्याशंक्य अत्र केचिदित्यादिना प्रकृतव्यापकताशरीरे
प्रतियोगिवैयधिकरण्यविशेषणं सार्थकीकृत्य भाविदीधितिं समर्थयितुं केषां-
चित्मतमुपन्यस्य वस्तुतस्तु इत्यादिना तत्रास्वरसमभिधाय स्वयमन्यथा
व्यापकतावच्छेदकत्वं निरुक्तवान् भट्टाचार्यः साध्यवत्यकिञ्चिदित्यादिना ।
ततः च भाविदीधितिग्रन्थसमर्थनप्रयासप्रदर्शनेनानेन व्यापकतावच्छेद-
कत्वपरिष्कारेण निखिलभाविदीधितिग्रन्थविरोधिना अवश्यं भवितव्यम् ।
तच्च न घटते । यदि दीधितिग्रन्थसमर्थनाय अयं ग्रन्थः प्रवृत्तः
तदा अव्यवहितपूर्वदीधितेः तदव्यवहितोत्तरदीधितेश्च विरोधात् । तथा
हि कालो गोमान् गोत्वादित्यादौ गवाद्यभावस्य लक्षणघटकता दीधितौ
दर्शयिष्यते । तच्च सामान्यपदाप्रवेशे विरुध्यते । गवाद्यभावीयप्रति-
योगिताविशिष्टाया यत्किञ्चिद्गोव्यक्तेः स्वानधिकरणीभूतायां साध्य-
वत्यकिञ्चित्खण्डकालव्यक्तौ कालिकसंबन्धेनासंबद्धतया तादृशप्रतियोगि-
ताया लक्षणघटकत्वासंभवादिति । न चैतद्दीधितिसमर्थनायैव सामान्यपदं
लक्षणे निवेश्यमिति वाच्यम् । यदि केवलं दीधितिग्रन्थसमर्थनायैव
प्रयोजनान्तरशून्यस्यापि विशेषणस्य लक्षणे प्रवेशनं भट्टाचार्यस्याभिप्रेतं
स्यात् तर्हि कपिसंयोगाभाववान् मेयत्वादित्यादि दीधितिसमर्थनायैव व्याप-
कताशरीरे प्रतियोगिवैयधिकरण्यनिवेशसंभवेन व्यापकताशरीरे प्रतियोगि-
वैयधिकरण्यवैयर्थ्यनिबन्धनभाविदीधितिविरोधशंकायां तत्सार्थक्यसंपादनेन
तादृशदीधितिं समर्थयतां मन्मतोपन्यासस्य उन्मत्तप्रलापतुल्यत्वापत्तेः । अथ
गोमान् गोत्वादित्यादौ गवाद्यभावस्य लक्षणघटकत्वाभावेऽपि गवादेरित्यादि-
पद्ग्राह्यप्रलयान्यत्वाद्यभावस्य प्रतियोगिसामानाधिकरण्यमादाय प्रसक्तदोष-
वारकतयैव तत्सार्थक्यं संभवतीति न तद्दीधितिविरोध इति चेत् तर्हि
कपिसंयोगाभाववान् मेयत्वादित्यादौ कपिसंयोगात्मकाभावस्य लक्षणघट-

कत्वाभावेऽपि यावद्धेत्वधिकरणान्तर्भावेनेत्यस्य आदिपदग्राह्ये सत्तावान् द्रव्यत्वादित्यत्र सत्ताद्यभावमादाय प्रसक्तातिव्याप्तिवारकतयैव स्वविशिष्टपदसार्थक्य सम्भवतीति तद्दीधितिविरोधपरिहाराय व्यापकताशरीरे प्रतियोगिवैयधिकरण्यसार्थक्योपपादनस्यानर्थक्यात्। अथ आदिपदग्राह्य स्थलान्तरे स्वविशिष्टपदव्यावृत्तिरास्ताम्। कपिसयोगाभाववान् मेयत्वादिति दीधिते का गतिरिति तदर्थं प्रतियोगिवैयधिकरण्यसार्थक्योपपादनमिति चेत्, तर्हि गोमान् गोत्वादित्यत्रापि आदिपदग्राह्यप्रलयान्यत्वाद्यभावमादाय यावद्धेत्वधिकरणान्तर्भावेन तस्य व्यावृत्तिरास्ताम्। गवादेरभावस्येत्यादिदीधिते का गतिरिति तुल्य पर्यनुयोग। एव सामान्यपदाप्रवेशे एवमन्यादृशा अपि शकास्तुल्यपर्यनुयोगेन परिहार्या। एव सामान्यपदाप्रवेशे धूमवान् वह्नेरित्यादौ धूमादिनिष्ठप्रतियोगिताया लक्षणघटकत्वाभावेन धूमाद्यभावाना गोत्वाभावादिरूपप्रतियोगिसामानाधिकरण्यमादायातिव्याप्तिशङ्काया अनवतारेण तादृशशङ्काया जलवृत्तित्वविशिष्टेत्यादिदीधितिग्रन्थोत्थापना सङ्गतिश्चेति। एव सामान्यपदाप्रवेशे भट्टाचार्यग्रन्थसदर्भा अपि परदशता विरुध्यन्ते। अत्र केचित्—साध्यवत्यकिञ्चिद्व्यक्त्यसबद्धस्वविशिष्टसामान्यकभिन्नत्वरूपव्यापकतावच्छेदकत्वस्य वा निवेशनीयतया कपिसयोगाभावादिनिष्ठप्रतियोगिताया अपि व्यापकतावच्छेदकत्वनिर्वाह इत्यभिप्रेत्य कपिसयोगाद्यात्मकाभावमादाय अव्याप्तिराशङ्किता। अन्यथा पुन सत्तावान् जातेरित्यादौ काले कालिकसबन्धेन हेतुसमानाधिकरणाना सत्तात्वाद्यवच्छिन्नसत्ताद्यभावाना हेत्वधिकरणसामान्यान्तर्गतगगनाद्यन्तर्भावेन प्रतियोगिसामानाधिकरण्यविरहात् प्रसक्ताव्याप्तेर्वारणाय स्वविशिष्टेति विशेषणमावश्यकम्। आदिपदग्राह्यमपि तादृशस्थलमेवेति बोध्यमिति भट्टाचार्यग्रन्थो दृश्यते। अत्र कपिसयोगाभावनिष्ठप्रतियोगिताया अपि व्यापकतावच्छेदकत्वनिर्वाह इत्यभिप्रेत्येत्यस्य अन्यथा पुनरित्यस्य न सम्यग्गर्भग्रन्थसपर्यालोचनायाम् एत

दीधितिसमर्थनायैव साध्यवत्यकिञ्चिदित्यादि व्यापकतावच्छेदकत्वनिरुक्ति
पागस्माभि कृता वास्तविकन्तु व्यापकतावच्छेदकत्वमन्यदेव निर्वचनीयमास्ते
इत्यवगम्यते । न च साध्यवत्यकिञ्चिदित्यादि व्यापकतावच्छेदकशरीरे
सामान्यपदाप्रवेशेऽपि कपिसंयोगाभावनिष्ठप्रतियोगिताया व्यापकतावच्छेद
कत्वनिर्वाहात् सामान्यपदवैयर्थ्यमिति वाच्यम् । गवादेरभावस्येत्यादि दीधि
तिसमर्थनाय तदुपादानात् । न चैव व्यापकतावच्छेदकत्वशरीरे प्रति-
योगिवैयधिकरण्यप्रवेशप्रयासप्रतिपादनप्रयास प्रागुक्तरीत्या व्यर्थ इति
वाच्यम् । सभवत प्रयोजनस्य परित्यागानौचित्यात् । अत्र च साध्य-
वत्यकिञ्चिद्व्यापकतावच्छेदकत्वनिरुक्त्यस्वरसबीजन्तु दीधितिसमर्थनमात्र
प्रयोजनकस्य प्रयोजनान्तरशून्यस्य सामान्येत्यस्य प्रकृतलक्षणे प्रवेशनीयत्व
मेव । अत तद्वैयर्थ्यप्रयुक्तदूषण नेदानीमुद्भावनीयम् भट्टाचार्येणैव तस्य सूचि
तत्वात् प्रतियोगिवैयधिकरण्यघटितनिरुक्तव्यापकतावच्छेदकत्वास्वरसबीजन्तु
गुरुधर्मस्यानवच्छेदकत्वनिबन्धन तु भट्टाचार्येणैव प्रागुपदर्शितम , निर्वच
नीयव्यापकतावच्छेदकत्व तु साध्यवन्निष्ठाभावीयवैशिष्ट्यव्यासज्यवृत्तिधर्मा
नवच्छिन्नव्यधिकरणधर्मानवच्छिन्नप्रतियोगित्वान्यूनानतिरिक्तवृत्तिभिन्नत्वम् ।
वह्निमान् धूमादित्यादौ तादृशप्रतियोगिता घटत्वाद्यवच्छिन्ना घटादिनिष्ठा
प्रतियोगिता तदन्यूनानतिरिक्तवृत्तिभिन्नत्वस्य घटत्वाद्यवच्छिन्नवह्न्यादिनिष्ठ
प्रतियोगिताया सत्त्वाल्लक्षणसमन्वय । तत्र च एतल्लक्षणान्यक्षणवृत्तित्व
विशिष्टवह्नित्वावच्छिन्नाभाव तार्णतार्णदहनोभयत्वावच्छिन्नाभाव वह्नित्वेन
वह्न्यभावमादाय वह्न्यादिप्रतियोगिताया व्यापकतावच्छेदकत्वासमववारणाय
वैशिष्ट्यव्यासज्यवृत्तिधर्मावच्छिन्नत्व प्रतियोगिता विशेषणम् । घटत्वेन वह्न्य
भावप्रतियोगिताया घटत्वेन किमपि प्रमेय नास्ति घटत्वेन किमपि द्रव्य
नास्तीत्यादिप्रतीतिसिद्धाभावीयप्रतियोगितानतिरिक्तवृत्तित्वात् महानसीय
वह्निर्नास्तीत्यादिप्रतीतिसिद्धाभावीयप्रतियोगित्वात न्यूनवृत्तित्वाच्च तदोप-

वारणाय अन्यूनेत्यनतिरिक्तवृत्तीति च, सयोगेन द्रव्यस्याव्याप्यवृत्तित्वे तु वह्निमान् धूमादित्यादौ घटत्वेन द्रव्यत्वाद्यभाव लक्षणघटक । न च प्रथमतो व्यधिकरणधर्मावच्छिन्नप्रतियोगिताको घटत्वादिना वह्न्यभावादिरेवेत्यभिधान भट्टाचार्यस्य विरुध्यत इति वाच्यम् । तस्य सयोगेन द्रव्यस्य व्याप्य वृत्तित्वमिति स्थूलदृष्ट्या उक्तत्वात् । अन्यथा तत्रैवकारेण समा नाधिकरणधर्मावच्छिन्नवह्न्यभावव्यावृत्तिकथनवैयर्थ्यापत्ते । इदानीं कपि सयोगाभावनिष्ठप्रतियोगिताया व्यापकतावच्छेदकत्व न निर्वहति तस्या कपिसयोगात्मकाभावीयतादृशप्रतियोगित्वान्यूनानतिरिक्तवृत्तित्वादिति पर्या लोच्य अन्यथा पुनरित्यादिना प्रकारान्तरेण स्वविशिष्टपदव्यावृत्तिर्दर्शिता । अत्रैव कालिकसबन्धेन गवादेरव्याप्यवृत्तितया गवादिनिष्ठप्रतियोगिताया निरुक्तव्यापकतावच्छेदकत्वनिर्वाहेण गवादेरभावस्येत्यादि दीधितिसदर्भविरोध इति का नो हानि । न हि दीधितिसदर्भसमर्थनायाय परिष्कार , साध्यवत्त्यकिञ्चिदित्यादिपरिष्कारस्यैव दीधितिसदर्भसमर्थनपरत्वात् । पर तु एतत्परिष्कारेऽपि दीधितिकृता निवेशिताना विशेषणाना प्रयोजनत्वमुप पादनीयम् । अन्यथा पुनरित्यादिना भट्टाचार्येण स्वविशिष्टत्वव्यावृत्तिदानात् लिङ्गात् । तच्चोपपद्यत एव । गोमान् गोत्वादित्यादौ प्रलयान्यत्वाभाव मादाय अतिव्याप्तेर्वारकतया हेत्वधिकरणावच्छेदेनेत्यस्य सत्तावान् जात रित्यादौ सत्ताभावमादायातिव्याप्तेर्वारकतया स्वविशिष्टेत्यस्य च प्रयोजनत्वात् । नन्वत्रापि व्यापकताघटकाभावे प्रतियोगिवैयधिकरण्यनिवेशनमावश्यकम् । अन्यथा सबन्धसामान्येन साध्यवन्निष्ठत्वनिवेशे कालपरिमाणवान् द्रव्य त्वादित्यादौ व्यतिरेकितावच्छेदकप्रतियोगितामात्रस्यैवेत्यादिना भट्टाचार्योप दर्शितदूषणप्रसङ्गादिति चेन्न, प्रतियोगिमत्ताग्रहविरोधितानियामकसबन्धेन साध्यवन्निष्ठत्वनिवेशनैव तद्दोषवारणसभवेन प्रतियोगिवैयधिकरण्यनिवेशस्या नावश्यकत्वादित्याहु । एतावता ग्रन्थसमर्थनमात्रप्रयोजनकसामान्यपदघटन

मेव हि अन्यथा पुनरित्यादिसंदर्भसूचिते साध्यवत्यकिञ्चिदित्यादिव्यापक-
तावच्छेदकत्वनिरुक्त्यनादरे बीजतया दर्शितम्। तच्च न संभवति; तथा
सति सामान्यपदं परित्यज्य दर्शितव्यापकतावच्छेदकत्वस्यैव स्वीकर्तुमुचित-
त्वेन व्यापकतावच्छेदकत्वान्तरनिरुक्तेः अन्याय्यत्वात्। न च सामान्यपद-
परित्यागे गवाद्यभावस्य लक्षणघटकत्वोपपादकदीधितिविरोध इति वाच्यम्;
तस्य इदानीमप्रयोजकीकृतत्वात् अन्यथा व्यापकतावच्छेदकत्वान्तरनिरुक्त्या-
दरेऽपि अनिस्तारात्। अथ मास्तु व्यापकतावच्छेदकत्वान्तरनिरुक्तिरिति
चेत्; तर्हि अन्यथा पुनरित्यादिना स्थलान्तरे स्वविशिष्टपदव्यावृत्तिदान-
गवेषणानुचिता। सामान्यपदानुपादानेऽपि कपिसंयोगाभावसाध्यके स्ववि-
शिष्टपदव्यावृत्तेः सुवचत्वात्। तस्मात् स्वनिरुक्तव्यापकतावच्छेदक-
तायामपरितोषात् अन्यथा पुनरित्यादिग्रन्थो न प्रवृत्तः किन्तु व्यापकता-
वच्छेदकत्वान्तरनिरुक्त्यादरे कपिसंयोगाभावसाध्यके व्यावृत्त्यभावमाशंक्यैवेति
वक्तव्यम्। तथा च सामान्यपदवैयर्थ्यप्रयुक्तदूषणं भट्टाचार्येण सूचितमिति
शक्यत एव तदिदानीमुद्भावयितुं मयेति। वयं तु ब्रूमः; साध्य-
वत्यकिञ्चिद्वृत्यसंबद्धस्वविशिष्टसामान्यकभिन्नत्वमित्यत्र सामान्यपदप्रवेशनं
लाघवायैव। तथा हि तथाविधसामान्यकभिन्नत्वं न तथाविधसामान्यकत्वा-
वच्छिन्नप्रतियोगिताकैकभेदवत्त्वं स्वत्वस्य अनुगतानतिप्रसक्तस्याभावात्।
किन्तु तादृशस्वविशिष्टसामान्यकं यद्यत् तत्तद्वृत्तित्वावच्छिन्नप्रतियोगिताक-
भेदकूटवत्त्वम्। अत एव यद्यत् स्वमित्यादि भट्टाचार्येणोक्तम्। तत्र च
सामान्यपदाप्रवेशे वह्न्यादिप्रतियोगितादेरपि तथाविधस्वविशिष्टतया तद्भेदा
अपि निवेशनीयाः प्रसज्येरन्। निवेशनं च तेषां निष्प्रयोजनमिति
पर्यालोच्य भट्टाचार्यः सामान्यपदं दत्तवान्। इदानीं वह्न्यादिप्रतियोगिता-
देरतादृशतया शैवालप्रतियोगिकत्वतद्वह्नित्वाद्यवच्छिन्नप्रतियोगित्वादीनामेव
च तादृशत्वेन तद्भेदा एव निवेश्यन्ते; न तु वह्न्यादिप्रतियोगिताभेदा

अपीति कतिपयभेदानिवेशनप्रयुक्तलाघवसंपादकं सामान्यपदं निवेशनीयम् । न एवं च साध्यवत्यत्किञ्चिदित्यादिव्यापकतावच्छेदकत्वं समीचीनमेव । न चास्य समीचीनत्वेन अन्यथा पुनरित्यनेनात्रानिर्भरसूचनम् भट्टाचार्यस्यासङ्गतमिति वाच्यम् । अन्यथा पुनरित्यादिग्रन्थस्यात्रानिर्भरसूचकत्वानङ्गीकारात् प्रकारान्तरेण व्यापकतावच्छेदकत्वनिरुक्त्यैव कपिसंयोगाभाववान् मेयत्वादित्यत्राव्याप्तिवारणसंभवात् तद्वारणप्रयोजनकं स्वविशिष्टत्वविशेषणं व्यर्थमित्याशंकायां प्रकारान्तरेण व्यापकतावच्छेदकत्वनिरुक्तावपि तद्विशेषणसार्थक्योपपादनायैव अन्यथा पुनरित्यादिग्रन्थोत्थानादिति पुनः निर्व्लीकः पन्थाः ।

इति प्रथमस्वलक्षणम्

# द्वितीयस्वलक्षणम्

द्वितीयस्वलक्षणे प्रतियोगितावच्छेदकावच्छिन्नसामानाधिकरण्य-
मित्यत्र प्रतियोगितावच्छेदकतावच्छेदकसंबन्धेन प्रतियोगितावच्छेदकवैशिष्ट्यं
निवेशयिष्यता धूमवान् वह्नेरित्यादौ लक्षणघटकाना यावतामेव अभावाना
यथाकथञ्चित् प्रतियोगितावच्छेदकावच्छिन्नसामानाधिकरण्यमुपपाद्यातिव्याप्तिं
प्रसञ्जयता भट्टाचार्येण स्वरूपसंबन्धावच्छिन्नप्रतियोगिताकस्य धूमवत्त्व-
प्रकारकप्रमाविशेष्यत्वाद्यभावस्य कालिकसंबन्धेन तादृशविषयत्वत्वादिविशिष्ट-
संयोगादिध्वंसेन अनुयोगितासंबन्धेन तादृशविषयत्वत्वादिविशिष्टतादृश-
विषयत्वत्वाद्यभावेन च समं स्वरूपसंबन्धेन सामानाधिकरण्यसत्त्वात् अति-
व्याप्तिरिति लिखितम् ।

तत्र विचार्यते—व्यभिचारिणि साध्याभावस्य विशेषणताविशेषेण
किञ्चिद्विशिष्टस्वाभावनिष्ठतादृशाभावत्वरूपप्रतियोगितावच्छेदकावच्छिन्नसा-
मानाधिकरण्यमादाय अतिव्याप्तिवारणाय प्रतियोगितावच्छेदकावच्छिन्नसा-
मानाधिकरण्यमित्यनेन प्रतियोगितावच्छेदकावच्छिन्नाभावसामानाधिकरण्यस्य
स्वयमेव पूर्वमेव विवक्षिततया दर्शितस्थले संयोगादिध्वंसस्य तादृश-
प्रमाविषयत्वत्वाद्यभावस्य च येन केनापि सबन्धेन प्रतियोगितावच्छेद-
कविशिष्टत्वेऽपि भावरूपत्वाभावेन यथोक्तधूमवत्त्वप्रमाविपयत्वाभावस्य प्रति-
योगितावच्छेदकावच्छिन्नाभावसामानाधिकरण्याभावात् कथमतिव्याप्तिरिति ।
न तु प्रतियोगितावच्छेदकावच्छिन्ने भावत्वविशेषणप्रयोजनाभिधानमस्तीति ।

द्वितीयस्वलक्षणम्

यस्तुतस्तु प्रतियोगितावच्छेदकावच्छिन्ने भावत्वविशेषणमपेक्ष्य प्रति
योगितावच्छेदक एवाभावावृत्तित्वं निवेशनीयमिति क्वाचित्क पाठो दृश्यते ।
तल्लक्षण एव भट्टाचार्यस्य निर्भर ; प्रतियोगितावच्छेदकावच्छिन्ने भावत्व
निवेशकल्पे किञ्चिद्विशिष्टस्य स्वस्य योऽभाव सामानाधिकरण्यसंबन्धेन
तद्विशिष्टस्याभावो विशिष्टस्वसमनियतोऽपि स्वस्मादतिरिक्त एवेति निर्बन्ध-
स्यावश्यकर्तव्यत्वात् अत्र तु तदनावश्यकत्वात् तथा च तादृशपक्षाभिप्रायक
एवायं ग्रन्थ दर्शिताभावप्रतियोगितावच्छेदके धूमवत्त्वप्रकारकप्रमाविषयत्वके
अभावावृत्तित्वस्याक्षतत्वात् । न च धूमवत्त्वप्रकारकप्रमाविषयत्वस्यापि दर्शित
संयोगादिध्वंसधूमवत्त्वप्रकारकप्रमाविषयत्वत्वाभावादौ कालिकविशेषणतानुयो
गिताविशेषादिसंबन्धेन वृत्तित्वमक्षतमिति वाच्यम्, तथा सति सद्धेतुस्थलेऽ
भावप्रतियोगितावच्छेदकमात्रस्यैव ध्वंसात्मकाभावे कालिकसंबन्धेन वृत्तिमत्तया
असंभववारणाय प्रतियोगितावच्छेदकतावच्छेदकसंबन्धेनैव अभावावृत्तित्वस्य
वाच्यतया धूमवत्त्वप्रकारकप्रमाविशेष्यत्वत्वे तादृशस्वरूपसंबन्धेनाभावावृत्ति
त्वस्याक्षतत्वात् । नैवं—यतोऽत्र कल्पे भट्टाचार्यस्य न निर्भर , युक्त्य-
सहत्वात् । उत्तरग्रन्थस्वरसविरोधाच्च । युक्त्यसहत्वं कथमिति चेत्, उक्तयु-
क्त्या अभावनिरूपितवृत्तिताया प्रतियोगितावच्छेदकताघटकसंबन्धावच्छिन्न-
त्वस्यावश्यं निवेशनीयतया वह्निमान् धूमादित्यादौ वह्नित्वेन घटाभावस्य
समवायित्वेन वाच्यत्वाभावाभिन्नतया स्वरूपसंबन्धस्यापि तत्प्रतियोगिता-
वच्छेदकताघटकत्वेन तत्संबन्धावच्छिन्नाया अभावनिरूपितवृत्तिताया कथं-
चित् प्रसिद्धिसंभवेऽपि वह्नित्वेन वह्न्यभावस्यापि तत्र लक्षणघटकतया
तत्प्रतियोगितावच्छेदकताघटकसमवायसंबन्धावच्छिन्नाया अभावादिनिरूपित-
वृत्तिताया अप्रसिद्ध्या अव्याप्त्यापत्ते । न च प्रतियोगिवैयधिकरण्याघटि-
तव्यापकताया एव एतल्लक्षणे निविष्टतया संयोगेन द्रव्यस्याव्याप्यवृत्ति-
त्वेन तत्र वह्न्यभावस्य लक्षणघटकतैव नास्ति; किन्तु द्रव्यत्वाभावत्वेन

घटाभावादीनामेव तत्र लक्षणघटकता तत्प्रतियोगितावच्छेदकताघटक-
संबन्धश्च स्वरूपसंबन्ध एवेति नाप्रसिद्धिः वह्न्यभावधूमाभावादीनां तत्र
तत्र लक्षणघटकत्वोपवर्णनं तु भट्टाचार्यस्य प्रौढवादाभिप्रायकम् प्रकृत-
लक्षणे प्रतियोगिवैयधिकरण्याघटितव्यापकतानिवेशस्य तेनैव असकृदुपपादि-
तत्वात् इति वाच्यम् ; तथापि काल· सर्ववान् इत्यत्र महाकालपरिमाणा-
भावस्य कालिकसंबन्धेन हेतुसामानाधिकरण्यस्य प्रतियोगितावच्छेदकता
वच्छेदकसमवायसंबन्धेनाभावनिरूपितवृत्तित्वाप्रसिद्ध्याव्याप्तेर्दुर्वारत्वात । न
च ·महाकालपरिमाणाभावस्य समवायवत् स्वरूपसंबन्धोऽपि प्रतियोगिता-
वच्छेदकताघटक· पूर्वक्षणवृत्तित्वविशिष्टतदभावत्वस्य स्वरूपसंबन्धेनैव तत्प्रति-
योगितावच्छेदकत्वात् तेन च संबन्धेनाभाववृत्तिता नाप्रसिद्धेति वाच्यम् ।
तथापि वह्निमान् धूमादित्यादौ कालिकसंबन्धेन हेतुसामानाधिकरण्यस्य
समवायसंबन्धावच्छिन्नवाच्यत्वावच्छिन्नप्रतियोगिताकाभावस्यापि लक्षणघट-
कतया तस्य च प्रतियोगितावच्छेदकीभूतस्वरूपसंबन्धावच्छिन्नाभावनि-
रूपितवृत्तित्ववदन्यप्रतियोगितावच्छेदकाप्रसिद्ध्या अव्याप्तेर्दुर्वारत्वात् । न च
समवायसंबन्धावच्छिन्नवाच्यत्वावच्छिन्नप्रतियोगिताकाभावस्य समवायसंसर्ग-
कवाच्यत्वप्रकारकप्रमाविशेष्यत्वाभावसमनियतत्वेन तदभिन्नतया तादृशप्रमा
विशेष्यतात्वमपि तादृशप्रतियोगितावच्छेदकम् तच्च स्वरूपसंबन्धेनाभाववृत्ति
तदवच्छिन्नसामानाधिकरण्यमपि पर्वताद्यन्तर्भावेण तादृशाभावेऽक्षतमिति को
दोष इति वाच्यम् । एवमपि कालिकसंबन्धेन धूमसमानाधिकरणस्य सम-
वायसंबन्धावच्छिन्नद्रव्यत्वत्वावच्छिन्नप्रतियोगिताकाभावस्य कालिकसंबन्धा-
वच्छिन्नद्रव्यत्वनिष्ठावच्छेदकताकस्वरूपसंबन्धावच्छिन्नप्रतियोगिताकाभावस -
मनियतत्वेन तदभिन्नतया कालिकसंबन्धोऽपि द्रव्यत्वाभावप्रतियोगिता-
वच्छेदक तेन संबन्धेनाभाववृत्तिप्रतियोगितावच्छेदकाप्रसिद्धिः । सर्वस्यैव
च ध्वंसात्मकाभावे कालिकसंबन्धेन वृत्ते· दर्शिताभावसमनैयत्यं द्रव्यत्वा-

भावस्य कथमिति चेत्; यतः कालिकसंबन्धेन द्रव्यत्ववान् ध्वंसः स्वरूप-संबन्धेन सर्वत्रैव द्रव्ये वर्तते; न गुणादौ; न च उत्पत्त्यनन्तरोत्पत्त्यनन्तरत्रि-चतुरक्षणपर्यन्तं घटादौ पवमानपरमाणुसंयोगध्वंसस्यापि उत्पादासंभवात् ताव-त्क्षणावच्छेदेन तत्र दर्शिताभावसत्त्वात् न तस्य द्रव्यत्वाभावसमनैयत्यमिति वाच्यम्। तथापि कालिकसंबन्धेन चरमक्रियाध्वंसस्य साध्यतायां प्रलयमहा कालान्यतरत्वहेतौ कालिकसंबन्धेन हेतुसमानाधिकरणस्य कालिकसंबन्धा-वच्छिन्नचरमक्रियाध्वंसत्वावच्छिन्नप्रतियोगिताकाभावस्य साध्यतावच्छेदका-वच्छिन्नव्यापकतावच्छेदकीभूतमावृत्तिरूपावच्छिन्नप्रतियोगिताकत्वविरहेण लक्षणाघटकत्वेऽपि कालिकसंबन्धसंसर्गकचरमक्रियाध्वंसवत्त्वप्रकारकप्रमावि-शेष्यत्वाभावस्य तादृशस्य लक्षणघटकतया तस्य च कालिकसंबन्धावच्छिन्न-चरमक्रियाध्वंसनिष्ठप्रतियोगितावच्छेदकताकभेदसमनियतत्वेन तदभिन्नतया कालिकसंबन्धस्यापि तत्प्रतियोगितावच्छेदकतावच्छेदकत्वेन तेन च संबन्धे-नाभावावृत्तिप्रतियोगितावच्छेदकाप्रसिद्धिः तदेवमभावावृत्तित्वनिवेशपक्षस्य युक्त्यसहत्वं दर्शितम्। अथोत्तरग्रन्थस्वरसविरोधः कथमिति चेत्; इत्थम्; वस्तुतस्तु इत्यादिग्रन्थानन्तरं प्रतियोगितावच्छेदकावच्छिन्नभावसामानाधि-करण्यमित्येव बहुशो लिखितम्। भट्टाचार्यो यद्यभावावृत्तित्वनिवेशपक्षमेव निरभरिष्यत् तर्हि अभावावृत्तिप्रतियोगितावच्छेदकावच्छिन्नसामानाधिक-रण्यमित्येवालिखिष्यत्। तस्मात् वस्तुतस्तु इत्यादिग्रन्थः न वास्तविकः। किन्तु केनचित् कल्पितः। अत एव बहुपुस्तकेषु अयं ग्रन्थो न दृश्यते। तस्मात् संयोगादिध्वंसादिसामानाधिकरण्यमादायातिव्याप्त्युपपादनमसङ्गत-मिति। स्थूलदृष्ट्या इदमभिहितम् निपुणतरविवेचनायां तु कालिकसंबन्धेन तादृशप्रतियोगितावच्छेदकविशिष्टवह्न्यात्मकभावसामानाधिकरण्यमादायैवा-तिव्याप्तिः उपपादनीयेति वाच्यम्। प्रतियोगितावच्छेदकावच्छिन्नसामा-नाधिकरण्यस्य प्रतियोगितावच्छेदकसंबन्धेनैव प्राक् विवक्षिततया धूमवत्त्व-

प्रकारकप्रमाविशेष्यत्वाभावप्रतियोगितावच्छेदकीभूतस्वरूपसंबन्धेन वह्नेरवृत्तेः ।
न च धूमवत्त्वप्रकारकप्रमाविशेष्यत्वाभावस्य धूमाभावसमनियततत्वेन तद-
भिन्नतया संयोगोऽपि तत्प्रतियोगितावच्छेदक इति तेन संबन्धेन वह्निसामा-
नाधिकरण्यमादायातिव्याप्तिप्रसक्तिरिति वाच्यम् । अवच्छिन्नवृत्तिकत्वा-
वच्छिन्नवृत्तिकान्यत्वरूपविरुद्धधर्माध्यासेन तयोर्भेदात् ।

अत्र केचित् । विषयतायाः विषयस्वरूपतावादिप्राचीनमते अयो-
गोलकत्वप्रकारकप्रमाविशेष्यत्वस्यायोगोलकस्वरूपत्वेन तस्य कालोपाधितया
औचित्यावर्जनीयतया धूमप्रकारकप्रमाविशेष्यत्वाभावस्य कालिकसंबन्धेन स्व-
प्रतियोगितावच्छेदकीभूतधूमप्रकारकप्रमाविशेष्यतात्वाभावस्य कालिकसंबन्धेन
स्वप्रतियोगितावच्छेदकीभूतधूमप्रकारकप्रमाविशेष्यतात्वविशिष्टं यदयोगोलक-
त्वप्रकारकप्रमाविशेष्यत्वं तेन स्वरूपसंबन्धेन सामानाधिकरण्यमयोगोल-
कान्तर्भाविणाक्षतमिति अतिव्याप्तिप्रसक्तिरित्याहुः । तत्र च विषयितायाः
कालोपाधित्वमस्ति न वेति न वयं निश्चेतुं प्रभवामः ।

अन्ये तु अव्याप्यत्वस्य संबन्धतायाः दीधितिकृदभिप्रेततया धूम-
प्रकारकप्रमाविशेष्यतात्वस्याव्याप्यत्वसंबन्धेन अयोगोलकत्वप्रकारकप्रमाविशे-
ष्यत्वेऽपि सत्त्वात् तेन सामानाधिकरण्यमादायातिव्याप्तिप्रसक्तिरित्याहुः ।

अत्र च अव्याप्यतायाः संबन्धतापक्षाश्रयणे यत्समानाधिकरणा इति
विशेषणं स्वविशिष्टत्वविशेषणं व्यर्थम् । अतो नात्र लक्षणे तत्पक्षाश्रयणं
युक्तम्; वयं तु ब्रूमः—अभावावृत्तित्वनिवेशपक्षे एव भट्टाचार्यस्य निर्भरः
तत्पक्षे दर्शितनिर्बन्धाभावात् । न चैवं चरमक्रियाध्वंसस्य कालिकसंबन्धेन
साध्यतायां प्रलयमहाकालान्यतरत्वहेतौ उक्तरीत्याव्याप्तिरिति वाच्यम् ।
स्वप्रतियोगितावच्छेदकघटकीभूतयत्किञ्चित्संबन्धावच्छिन्नाभावनिरूपितवृत्ति-
ताशून्यत्वविवक्षयैव तादृशाव्याप्तिवारणात् । तत्र कालिकसंबन्धसंसर्गकचरम-
क्रियाध्वंसप्रकारकप्रमाविशेष्यत्वाभावस्य स्वप्रतियोगितावच्छेदकतावच्छेदकी-

भूतो यो विशेषणतात्मकयत्किञ्चित्संबन्धः तदवच्छिन्नाभावनिरूपितवृत्तिता-
शून्यं यत् तादृशप्रकारकप्रमाविशेष्यतात्वरूपं प्रतियोगितावच्छेदकं तद-
वच्छिन्नसामानाधिकरण्यसत्त्वात्। एवं प्रतियोगितावच्छेदकावच्छिन्नभाव-
सामानाधिकरण्यमित्युत्तरग्रन्थस्वरसविरोधोऽपि कथंचित् परिहर्तुं शक्यत
एव। प्रतियोगितावच्छेदकावच्छिन्ने भावत्वोक्त्या प्रतियोगितावच्छेदके-
ऽभाववृत्तित्वस्य लाभसंभवादित्यास्तां विस्तरः। अधिकमन्यत्र विवेचनीयम्।

द्वितीयस्वलक्षणे साध्यतावच्छेदकसंबन्धादिना साध्यतावच्छेदका-
वच्छिन्नव्यापकत्वप्रतियोगितावच्छेदकावच्छिन्नसामानाधिकरण्ययोः निवेशे
प्रतियोग्यवृत्तिश्चेत्यादिग्रन्थासङ्गतिं परिहृतवान्। तत्र च भक्षितेऽपि लशुने
न शान्तो व्याधिरिति आक्षिपामः—तथा हि "अयमात्मा ज्ञानादि"
त्यादौ संयोगसंबन्धावच्छिन्नात्मत्वत्वावच्छिन्नप्रतियोगिताकाभाव एव लक्षण-
घटकः तस्य च समवायसंबन्धावच्छिन्नाकाशत्वावच्छिन्नप्रतियोगिताकाभाव-
समनियतत्वेन तदभिन्नतया समवायसंबन्धस्यापि तत्प्रतियोगितावच्छेद-
कत्वेन तत्संबन्धघटितसाध्यव्यापकतावच्छेदकीभूतात्मत्वावच्छिन्नप्रतियोगिता-
कत्वस्य तत्संबन्धघटितात्मत्वरूपप्रतियोगितावच्छेदकावच्छिन्नभावसामानाधि-
करण्यस्य च तत्र सत्त्वात्। एवम् इदं वाच्यं ज्ञेयत्वादित्यादौ संयोग-
संबन्धावच्छिन्नवाच्यत्वत्वावच्छिन्नप्रतियोगिताकाभाव एव लक्षणघटकः तस्य
च स्वरूपसंबन्धावच्छिन्नाकाशत्वावच्छिन्नप्रतियोगिताकाभावसमनैयत्यमादाय
सर्वमुपपादनीयम्। एवं च प्रतियोग्यवृत्तिश्चेत्यादिग्रन्थासङ्गतिर्दुर्वारैव। न
च स्वीयतत्प्रतियोगितावच्छेदकसंबन्धेन तत्प्रतियोगितावच्छेदकावच्छिन्न-
भावसामानाधिकरण्यस्य विवक्षितत्वात् नायं दोषः। दर्शितस्थले समवाय-
संबन्धावच्छिन्नायाः स्वरूपसंबन्धावच्छिन्नायाश्च आकाशनिष्ठतदवच्छेदकी-
भूताकाशत्वावच्छिन्नसामानाधिकरण्यस्य तादृशाभावयोरसंभवादिति वाच्यम्।
तादृशविवक्षायाः प्रयोजनान्तरविरहेण केवलग्रन्थसङ्गमनायैव तथाविधविवक्षा-

दरे तथाविधव्यधिकरणधर्मावच्छिन्नप्रतियोगिताका इति स्वातन्त्र्येणाभाव-
विशेषणप्रक्षेपस्यैव उचितत्वेन यत्तत्वप्रवेशप्रयासवैफल्यात् अन्यथा विषयता-
संबन्धेन व्यापकत्वं तेनैव संबन्धेन प्रतियोगितावच्छेदकावच्छिन्नसामानाधि-
करण्यं विवक्षणीयमिति पूर्वकल्पेऽपि लक्षणघटकीभूतप्रतियोगितायामपि
विषयतासंबन्धावच्छिन्नत्वं प्रवेश्य संयोगसमवायादिरूपव्यधिकरणसंबन्धा-
वच्छिन्नप्रतियोगिताकाभाववारणसंभवेन सर्वत्र व्यधिकरणसंबन्धावच्छिन्नप्रति-
योगिताकाभावमादायैव लक्षणसमन्वयसंभवात् प्रतियोग्यवृत्तिश्चेत्यादिग्रन्था-
सङ्गतिरित्यर्थकेन एतेन इत्यनेन तत्पक्षदूषणं भट्टाचार्यस्य विरुध्येत । न च
एतदस्वरसेनैव ज्ञेयत्वत्वादिना वाच्यत्वाभावस्सुलभः इत्येतादृशग्रन्थासङ्गतेश्चेति
दूषणान्तरमादृतमिति वाच्यम् । एवमपि स्वप्रतियोगितावच्छेदकावच्छिन्न-
व्यापकताघटकयावत्संबन्धेन प्रतियोगितावच्छेदकावच्छिन्नसामानाधिकरण्य-
निवेशनरूपतत्पूर्वपक्षे दर्शितप्रतियोग्यवृत्तिश्चेत्यादिग्रन्थासङ्गतेरेव दूषणत्वे-
नाभिहिततया तत्रापि लक्षणघटकीभूतप्रतियोगितायां व्यापकताघटकसंब-
न्धावच्छिन्नत्वनिवेशेनैव व्यधिकरणसंबन्धावच्छिन्नप्रतियोगिताकाभाववारण-
संभवेन तदसङ्गतेर्दुर्वारत्वात् । ननु लक्षणघटकीभूतप्रतियोगितायां व्याप-
कताघटकसंबन्धावच्छिन्नत्वनिवेशेऽपि उपदर्शित दोषो दुर्वार एव । तथा हि
विषयतासंबन्धावच्छिन्नात्मत्वावच्छिन्नप्रतियोगिताकाभावस्य संयोगसंबन्धा-
वच्छिन्नात्मत्वप्रकारकप्रमात्वस्यापि तत्प्रतियोगितावच्छेदकत्वेन विषयता-
संबन्धस्यापि तत्प्रतियोगितावच्छेदकावच्छिन्नव्यापकताघटकयावत्संबन्धान्त-
र्गतविषयतासंबन्धेन आत्मत्वत्वरूपप्रतियोगितावच्छेदकावच्छिन्नसामानाधि-
करण्यासंभवादव्याप्तिरिति वाच्यम् । नेन संबन्धेन आत्मत्वप्रकारकप्रमा-
त्वरूपप्रतियोगितावच्छेदकावच्छिन्नसामानाधिकरण्यसत्त्वात् । न च तत्र
समवायविषयतयोरुभयोरपि स्वप्रतियोगितावच्छेदकावच्छिन्नव्यापकताघटक-
तया तदुभयसंबन्धेनैकप्रतियोगितावच्छेदकावच्छिन्नसामानाधिकरण्यसंभवा-

दतिव्याप्तिरिति वाच्यम् । यतो न तादृशयावत्संबन्धेन एकप्रतियोगिता-
वच्छेदकावच्छिन्नसामानाधिकरण्यं विवक्षितम् । किन्तु तादृशयावत्संबन्धैः
यथाकथंचित् प्रतियोगितावच्छेदकावच्छिन्नसामानाधिकरण्यमेव ; तच्च प्र-
कृते दुर्घटम् विषयतासंबन्धेन आत्मत्वप्रकारकप्रमात्वरूपप्रतियोगितावच्छेद-
कावच्छिन्नेन समवायसंबन्धेन चात्मत्वत्वरूपप्रतियोगितावच्छेदकावच्छिन्नेन
समं सामानाधिकरण्यस्य तत्र सत्त्वात् ; अन्यथा वह्निमान् धूमादि-
त्यादौ वह्निप्रकारकप्रमाविशेष्यतात्वावच्छिन्नस्वरूपसंबन्धावच्छिन्नप्रतियोगि-
ताकाभावस्य विशेष्यतासंबन्धावच्छिन्नवह्निप्रकारकप्रमात्वावच्छिन्नप्रतियोगि-
ताकाभावसमनियतत्वेन तदभिन्नतया स्वरूपविशेष्यतयोरुभयोरेव तत्प्रति-
योगितावच्छेदकावच्छिन्नव्यापकतावच्छेदकत्वात् । द्रव्यत्वत्वेन घटाभावस्य
वाच्यत्वत्वेन घटाभावसमनियतत्वेन तदभिन्नतया समवायस्वरूपसंबन्ध-
योरुभयोरेव तत्प्रतियोगितावच्छेदकावच्छिन्नव्यापकतावच्छेदकत्वात् तादृश-
यावत्संबन्धेन एकप्रतियोगितावच्छेदकावच्छिन्नसामानाधिकरण्यस्य तत्र-
[illegible]भावेषु अनुपपत्त्या अनुपपत्तेः । तथा [illegible] ज्ञानादिव्याप्ति-
व्यधिकरणधर्मावच्छिन्न[illegible] [illegible] [illegible] एव ।
एवमिदं वाच्यं [illegible] [illegible] [illegible] [illegible] ।
तस्मात् व्यापकतावच्छेदक[illegible] प्रतियोगितावच्छेदकावच्छिन्नसामानाधि-
करण्यनिवेशपक्ष[illegible] [illegible] ॥ [illegible] [illegible] प्रति-
प्रतियोगितावच्छेदकावच्छिन्न[illegible] [illegible] प्रतियोगि-
तावच्छेदकावच्छिन्नसामानाधिकरण्य[illegible] न [illegible] [illegible] । तथा
[illegible] । किन्तु [illegible]-
[illegible]
[illegible]
[illegible] [illegible] [illegible] [illegible] । अत्र
प्रतियोगितावच्छेदक[illegible] [illegible] [illegible] [illegible]

यद्यत्संबन्धावच्छिन्नत्वं लक्षणघटकीभूतप्रतियोगितायामपि निवेश्यताम्। तत्र यद्यत्संबन्धपदेन व्यापकताघटकप्रतियोगितायां यद्यत्संबन्धावच्छिन्नेत्यत्र यत्संबन्धो ग्रहीतः स एव ग्राह्य इति वयं पर्यनुयुञ्ज्महे। तथा सति प्रतियोग्यवृत्तिश्चेत्यादिग्रन्थानुत्थित्यभावात्। तत्र हि साध्यवन्निष्ठाभावीयसमवायसंबन्धावच्छिन्नप्रतियोगितानवच्छेदकं यदात्मत्वं तदवच्छिन्नसमवायसंबन्धावच्छिन्नप्रतियोगिताकाभावश्च न हेतुसमानाधिकरण इत्यादिरीत्या व्यधिकरणधर्मावच्छिन्नाभावस्वीकारस्य आवश्यकत्वात्। तस्मात् केवलग्रन्थासङ्गतिनिवारणाय लक्षणे किञ्चित्विवक्षणमन्याय्यमिति प्रतियोग्यवृत्तिश्चेत्यादिग्रन्थानुत्थितिर्दुर्वारैव।

अथ द्रव्यभिन्नत्वप्रकारकप्रमात्वावच्छिन्नविशेष्यतासंबन्धावच्छिन्नप्रतियोगिताकाभावभिन्नं प्रमेयत्वादित्यत्र लक्षणघटकीभूतानां यावतामेव समानाधिकरणधर्मावच्छिन्नाभावानां व्यभिचारनिरूपकाधिकरणीभूततादृशाभावमात्राधिकरणकत्वनियमेन तेषामधिकरणीभूततादृशाभावस्वरूपतया स्वविशिष्टतादृशाभावात्मकहेत्वधिकरणावच्छेदेन स्वात्मकाधिकरणीभूताभावप्रतियोगितावच्छेदकविशेष्यतासंबन्धेन प्रतियोगितावच्छेदकीभूतद्रव्यभिन्नत्वप्रकारकप्रमात्वावच्छिन्नसामानाधिकरण्यसत्त्वात् अतिव्याप्तिः। न चाभावाधिकरणकाभावस्य अधिकरणाभावस्वरूपत्वं दीधितिकृतामसम्मतम्। तैः धूमाभावाधिकरणकस्य जलवृत्तित्वविशिष्टगोत्वाभावाभावस्य धूमाभावस्वरूपताप्रतिक्षेपादिति वाच्यम्। तावता भावसाधारणस्यैव अभावाधिकरणकाभावस्य अधिकरणीभूताभावस्वरूपताया दीधितिकृदसम्मतत्वेनावगमात्। अभावमात्राधिकरणकाभावस्य तथात्वे बाधकाभावादिति। अधिकमन्यत्र विवेचनीयम्। तथा च दर्शितातिव्याप्तिवारणाय स्वावच्छेदकसंबन्धघटितसाध्यतावच्छेदकावच्छिन्नव्यापकतावच्छेदकरूपावच्छिन्नयद्यत्प्रतियोगिताका ये ये अभावाः तेषां प्रत्येकं तत्तदवच्छेदकावच्छिन्नसामानाधि-

करण्यमेव विवक्षणीयम् । दर्शितस्थले च द्रव्यभिन्नत्वप्रकारकप्रमात्वा-
वच्छिन्नविशेष्यता संबन्धघटितव्यापकतावच्छेदकरूपावच्छिन्ना किन्तु साध्य-
प्रकारकप्रमाविशेष्यतात्वावच्छिन्नस्वरूपादिसंबन्धावच्छिन्नप्रतियोगितैव ताद-
शीति नातिव्याप्तिः । इत्थं चायमात्मा ज्ञानात् इदं वाच्यं ज्ञेयत्वादित्यादौ
संयोगादिव्यधिकरणसंबन्धावच्छिन्नात्मत्वत्ववाच्यत्वत्वाद्यवच्छिन्नसमवायस्व -
रूपादिसंबन्धावच्छिन्नाकाशत्वावच्छिन्नप्रतियोगिता वा न लक्षणघटकी-
भवितुमर्हतीति व्यधिकरणधर्मावच्छिन्नाभावप्रतियोगित्वादर इति चेन्न ; एवं
सति प्रतियोगितावच्छेदकावच्छिन्ने भावत्वविशेषणवैयर्थ्यात् तद्धि धूमाभाव
स्य पूर्वक्षणवृत्तित्वविशिष्टस्याभावत्वरूपप्रतियोगितावच्छेदकावच्छिन्नसामाना-
धिकरण्यमादायातिव्याप्तिवारणाय निवेशितम् । तच्च इदानीं न घटते । तत्र
संयोगसंबन्धावच्छिन्नधूमत्वावच्छिन्नप्रतियोगिताया अपि यद्यत्प्रतियोगि-
तान्तर्गततया तदवच्छेदकीभूतसंयोगसंबन्धेन तदवच्छेदकावच्छिन्नसामानाधि-
करण्याभावेन अतिव्याप्त्यप्रसक्तेः । न च संयोगेन द्रव्यस्याव्याप्यवृत्तितया
धूमत्वस्य संयोगसंबन्धघटितव्यापकतावच्छेदकत्वं प्रतियोगिवैयधिकरण्या-
घटितव्यापकत्वस्यैवात्र लक्षणे निवेशनीयत्वादिति न धूमत्वावच्छिन्नप्रति-
योगिता यद्यत्प्रतियोगितापदेन उपादातुं शक्यते । किन्तु पूर्वक्षणवृत्ति-
त्वविशिष्टतदभावत्वावच्छिन्नप्रतियोगितैवेति अतिव्याप्तिरिति वाच्यम् । तथा
सति पूर्वक्षणवृत्तित्वविशिष्टतदभावत्वस्य वह्निनिष्ठधूमाभावीयस्वरूप-
संबन्धावच्छिन्नप्रतियोगितावच्छेदकतया तदवच्छिन्नप्रतियोगिताया अपि
लक्षणघटकत्वासंभवात् । तथा च धूमप्रकारकप्रमाविशेष्यत्वाभाव एव
लक्षणघटको वाच्यः तेषां च किञ्चिद्विशिष्टस्वाभावनिष्ठप्रतियोगिता इव
धूमप्रकारकप्रमाविशेष्यत्वादिनिष्ठप्रतियोगिता अपि यद्यत्प्रतियोगितान्तर्गता
इति तदवच्छेदकावच्छिन्नसामानाधिकरण्यस्यायोगोलकान्तर्भावेन तादृशा-
भावानामसंभवात् नातिव्याप्तिः । एवं यद्यत्प्रतियोगितानिवेशे प्रथम-

स्वलक्षणदूषणवेलायां भट्टाचार्योपदर्शितरीत्या तादृशी या या प्रति-योगिता तत्तदवच्छेदकसंबन्धेन तत्तदवच्छेदकावच्छिन्नसामानाधिकरण्यं यत्र क्वचन यद्धेत्वधिकरणयावदन्तर्भावेन तत्त्वमित्येतावतैव सामञ्जस्ये तत्तत्प्रतियोगितानिरूपकाभावप्रवेशस्य अभावे यावत्त्वप्रवेशस्य यत्समानाधि-करणत्वस्वविशिष्टत्वयोश्च वैयर्थ्यप्रसङ्गः । अथ यथोपदर्शिताभावसार्थकव्यभि-चारिण्यतिव्याप्तिवारणाय तादृशयत्प्रतियोगिताकाः ये येऽभावाः तेषां तत्तदवच्छेदकसंबन्धेन स्वप्रतियोगितावच्छेदकावच्छिन्न-सामानाधिकरण्य-मित्येवोच्यते । स्वम्—अभावः । न तु प्रतियोगितावच्छेदकावच्छिन्न-सामानाधिकरण्यमित्यत्रापि प्रतियोगितायाः तत्तद्व्यक्तित्वेन निवेश इति नोक्तदोषद्वयम् । तथा हि धूमवान् वह्नेरित्यादौ लक्षणघटकीभूतस्य धूमवत्त्व-प्रकारकप्रमाविशेष्यत्वाद्यभावस्य धूमवत्त्वप्रमाविशेष्यत्वाद्यभावनिष्ठप्रतियोगि-ताया अपि तादृशत्वेऽपि तदवच्छेदकीभूतस्वरूपसंबन्धेन किञ्चिद्विशिष्टस्वा-भावस्वरूपप्रतियोगितावच्छेदकावच्छिन्नसामानाधिकरण्यमादायातिव्याप्ति-वारणाय भावत्वविशेषणं सार्थकम् । एवं तादृशी या या प्रतियोगिता तत्तदवच्छेदकसंबन्धेन तत्तदवच्छेदकावच्छिन्नसामानाधिकरण्यं यत्र क्वचने-त्यादि दीधितिरिदानीं न संभवति । तदवच्छेदकावच्छिन्नसामानाधिकरण्य-मित्यस्माभिरनिवेशात् प्रतियोगितावच्छेदकावच्छिन्नेत्येवास्माभिर्निवेशात् प्रथ-मतो भावग्रहणाभावे तदुपपादनस्यावश्यकत्वात् लक्षणघटकपदार्थानां येन येन रूपेणास्माभिर्निवेशः कृतः तेन तेन रूपेणैव तन्निवेश्य इतरवैयर्थ्य-स्योपपादनीयतया रूपान्तरेण तन्निवेशप्रयुक्तेतरवैयर्थ्यस्यादोषत्वात् दर्शित-प्रमाभावभेदसार्थकव्यभिचारिण्यतिव्याप्तिरपीदानीं नास्ति । तत्र द्रव्य-भिन्नत्वप्रकारकप्रमात्वावच्छिन्नविशेष्यतासंबन्धावच्छिन्नप्रतियोगिताया अताद-शतया साध्यवत्त्वप्रकारकप्रमाविशेष्यतात्वावच्छिन्नस्वरूपसंबन्धावच्छिन्नप्रति-योगितायाश्च तदवच्छेदकीभूतस्वरूपसंबन्धेन तादृशाभावे प्रतियोगितावच्छेद-

कावच्छिन्नाभावसामानाधिकरण्यस्य हेत्वधिकरणीभूततादृशप्रमाभावान्तर्भावे-
नासत्वादिति चेन्न ; अधिकरणीभूतस्य द्रव्यभिन्नत्वप्रकारकप्रमात्वावच्छिन्न-
विशेष्यतासंबन्धावच्छिन्नप्रतियोगिताकाभावस्य द्रव्यभिन्नत्वप्रकारकप्रमा-
विशेष्यत्वत्वावच्छिन्नस्वरूपसंबन्धावच्छिन्नप्रतियोगिताकाभावसमनियतत्वेन
तदभिन्नतया तत्प्रतियोगितावच्छेदकीभूतद्रव्यभिन्नत्वप्रकारकप्रमाविशेष्यतात्व-
मपि तदात्मकलक्षणघटकीभूतसाध्यवत्त्वप्रकारकप्रमाविशेष्यत्वाभावप्रतियोगि-
तावच्छेदकमिति तादृशाभावे दर्शितस्वरूपसंबन्धेन द्रव्यभिन्नत्वप्रकारक-
प्रमाविशेष्यतात्वरूपप्रतियोगितावच्छेदकावच्छिन्नसामानाधिकरण्यस्य हेत्वधि-
करणीभूततादृशप्रमान्तर्भावेनाक्षतत्वादतिव्याप्तेर्दुर्वारत्वात् ; एवं धूमवान् वह्ने-
रित्यादौ धूमप्रकारकप्रमात्वावच्छिन्नविशेष्यतासंबन्धावच्छिन्नप्रतियोगित्या-
योगोलकासमवेतजातित्वावच्छिन्नसमवायसंबन्धावच्छिन्नप्रतियोगित्वयोरपि
तादृशयत्प्रतियोगितान्तर्गतत्वेन तत्तन्निरूपकाभावानामयोगोलके तत्तद-
वच्छेदकविशेष्यतासमवायाभ्यां स्वप्रतियोगितावच्छेदकावच्छिन्नासामानाधि-
करण्यादेवातिव्याप्तिवारणेन भावत्वविशेषणवैयर्थ्यं दुर्वारम् ।

अथ स्वावच्छेदकसंबन्धघटितसाध्यतावच्छेदकावच्छिन्नव्यापकता-
वच्छेदकरूपावच्छिन्नप्रतियोगिताका यावन्तोऽभावाः स्वीयतत्प्रतियोगिता-
वच्छेदकसंबन्धघटितसाध्यतावच्छेदकावच्छिन्नव्यापकतावच्छेदकं यत् तत्प्रति-
योगितावच्छेदकं रूपं तदवच्छिन्नेन समं तत्प्रतियोगितावच्छेदकसंबन्धेन
समानाधिकरणा इति विवक्षणात् न दर्शितानुपपत्तिः । अत्र तत्प्रतियोगिता-
वच्छेदकपदत्रयेण एकैव प्रतियोगिता धर्तव्येति एतावानेव नियमः न तु
अभावविशेषणनिविष्टप्रतियोगितैव धर्तव्येत्यपि । तथा च दर्शितप्रमाभावभेद-
साध्यकव्यभिचारिणि लक्षणघटकीभूतस्य साध्यवत्त्वप्रकारकप्रमाविशेष्यत्वाद्य-
भावस्य तादृशप्रतियोगितावच्छेदकं साध्यवत्त्वप्रकारकप्रमाविशेष्यतात्वादि-
कमेव न तु द्रव्यभिन्नत्वप्रकारकप्रमाविशेष्यतात्वादिकमिति नातिव्याप्तिः ।

धूमवत्त्वप्रकारकप्रमाविशेष्यत्वाभावायोगोलकासमवेतजात्यभावादीनां तादृश-
प्रतियोगितावच्छेदकं पूर्वक्षणवृत्तित्वविशिष्टस्याभावत्वादिकमपीति तादृशप्रति-
योगितावच्छेदकस्वरूपसंबन्धेन तदवच्छिन्नसामानाधिकरण्यमादायातिव्याप्ति-
वारणाय भावत्वविशेषणमपि सार्थकम्। मैवम्—एवमपि स्वरूपसंबन्धा-
वच्छिन्नवाच्यत्वत्वावच्छिन्नघटनिष्ठप्रतियोगिताकाभावभिन्नं मेयत्वादित्यादौ
लक्षणघटकीभूतानां सर्वेषामेव समानाधिकरणधर्मावच्छिन्नाभावानां व्य-
भिचारनिरूपकाधिकरणीभूतस्वरूपसंबन्धावच्छिन्नवाच्यत्वत्वावच्छिन्नघटनिष्ठ-
प्रतियोगिताकाभावमात्राधिकरणकत्वेन तदभिन्नतया तत्प्रतियोगितावच्छेदकं
वाच्यत्वत्वमपि लक्षणघटकीभूताभावप्रतियोगितावच्छेदकं तस्य च वाच्यत्व-
त्वावच्छिन्नघटनिष्ठप्रतियोगितामादाय स्वीयतत्प्रतियोगितावच्छेदकसंबन्धघटि-
तसाध्यतावच्छेदकावच्छिन्नव्यापकतावच्छेदकत्वमपि सूपपादमेव। तथा च
तत्प्रतियोगितावच्छेदकीभूतवाच्यत्वत्वावच्छिन्नेन समं तत्प्रतियोगितावच्छेद-
कीभूतस्वरूपसंबन्धेन सामानाधिकरण्यस्य सर्वेषामेवाभावानां सत्त्वादति-
व्याप्तिः। अभावमात्राधिकरणकस्यापि अभावस्य अधिकरणीभूताभावस्व-
रूपत्वं नास्तीत्यभिप्रायकमेव एतल्लक्षणम् प्रथमस्वलक्षणे भट्टाचार्यस्य तथा
व्यवहारदर्शनेऽपि द्वितीयस्वलक्षणे तददर्शनादिति चेत् तर्हि तद्रीत्यैव दर्शित-
प्रमाभावभेदसाध्यकव्यभिचारिण्यतिव्याप्तिवारणेन प्रतियोगितावच्छेदकाव-
च्छिन्नसामानाधिकरण्यनिविष्टप्रतियोगितावच्छेदके तत्प्रतियोगितावच्छेदक-
संबन्धघटितव्यापकतावच्छेदकत्वस्य प्रतियोगितावच्छेदकसंबन्धेनेति निवेशस्य
च व्यर्थतया प्रतियोग्यवृत्तिश्चेत्यादिग्रन्थानुत्थितिः दुरुपपादैव दर्शितरीत्या।
अत्र ब्रूमः—धूमवान् वह्नेरित्यादौ धूमवत्त्वप्रकारकप्रमाविशेष्यत्वाभावस्य
निर्धूमनिरूपितस्वरूपसंबन्धावच्छिन्नवृत्तिताशून्यत्वावच्छिन्नस्वरूपसंबन्धाव-
च्छिन्नप्रतियोगिताकाभावसमनियतत्वेन तदभिन्नतया तत्प्रतियोगितावच्छेद-
कीभूततादृशवृत्तिताशून्यत्वावच्छिन्नज्ञानेन साकं स्वसमनियतधूमप्रकारक-

प्रमात्वावच्छिन्नविशेष्यतासंबन्धावच्छिन्नप्रतियोगिताकाभावप्रतियोगितावच्छे-
-कीभूतविशेष्यतासंबन्धेनायोगोलकान्यत्वप्रकारकप्रमाविशेष्यत्वाभावस्य अयो-
गोलकनिरूपितस्वरूपसंबन्धावच्छिन्नवृत्तिताशून्यत्वावच्छिन्नस्वरूपसंबन्धाव -
च्छिन्नप्रतियोगिताकाभावसमनियतत्वेन तदभिन्नतया तत्प्रतियोगितावच्छेद-
कीभूततादृशवृत्तिताशून्यत्वावच्छिन्नेन ज्ञानेन साकं स्वसमनियतायोगोलकान्य-
त्वप्रकारकप्रमात्वावच्छिन्नविशेष्यतासंबन्धावच्छिन्नप्रतियोगिताकाभावप्रतियो -
गितावच्छेदकीभूतविशेष्यतासंबन्धेनायोगोलकासमवेतजातित्वावच्छिन्नसमवा -
यसंबन्धावच्छिन्नप्रतियोगिताकाभावस्य प्रसिद्धावपि तस्यायोगोलकासम-
वेतत्वावच्छिन्नसमवायसंबन्धावच्छिन्नप्रतियोगिताकाभावसमनियतत्वेन तद-
भिन्नतया तत्प्रतियोगितावच्छेदकीभूतायोगोलकासमवेतत्वावच्छिन्नेन ज्ञानेन
साकं स्वसमनियतायोगोलकासमवेतजातिप्रकारकप्रमात्वावच्छिन्नविशेष्यता-
संबन्धावच्छिन्नप्रतियोगिताकाभावप्रतियोगितावच्छेदकीभूतविशेष्यतासंबन्धेन
सत्त्वात् अतिव्याप्तिवारणाय स्वप्रतियोगितावच्छेदकसंबन्धघटितसाध्यता-
वच्छेदकावच्छिन्नव्यापकतावच्छेदकावच्छिन्नप्रतियोगिताका यावन्तोऽभावाः
स्वीयतत्प्रतियोगितावच्छेदकसंबन्धेन तत्प्रतियोगितावच्छेदकावच्छिन्नसमाना-
धिकरणा इत्यवश्यं विवक्षणीयम्। अत्र तत्प्रतियोगितापदद्वयम् एक
-विधप्रतियोगितापरम्। न तु पूर्वप्रतियोगितैव ग्राह्येत्यपि नियमः। एवं
चायमात्मा ज्ञानात् इदं वाच्यं ज्ञेयत्वादित्यादौ संयोगसंबन्धावच्छिन्ना-
त्मत्वत्ववाच्यत्वत्वाद्यवच्छिन्नप्रतियोगिताकाभावस्य स्वसमनियतसमवायस्व-
रूपादिसंबन्धावच्छिन्नाकाशाभावप्रतियोगितावच्छेदकीभूतसमवायस्वरूपादि -
संबन्धघटितव्यापकतावच्छेदकरूपावच्छिन्नप्रतियोगिताकत्वेऽपि तेषां दर्शित-
सामानाधिकरण्यासंभवेन व्यधिकरणधर्मावच्छिन्नाभावपरः। न च व्यधि-
करणधर्मावच्छिन्नाभावाङ्गीकारेऽपि दर्शिताभावानां लक्षणघटकत्वानपायात्
तेषां च दर्शितसामानाधिकरण्यासंभवात् अव्याप्तिरिति वाच्यम्। व्यधि-

करणधर्मावच्छिन्नाभावस्वीकारे दर्शिताभावानां वाच्यत्वत्वेन घटाभावसम-नियतत्वेन तदभिन्नतया तत्प्रतियोगितावच्छेदकीभूतवाच्यत्वत्वावच्छिन्नसामानाधिकरण्यमादाय लक्षणसमन्वयात्। यदि चैवमपि अयमात्मा ज्ञानात् इदं वाच्यं ज्ञेयत्वादित्यादौ कालिकसंबन्धावच्छिन्नवाच्यत्वत्वावच्छिन्न-प्रतियोगिताकाभावस्य स्वरूपसंबन्धावच्छिन्नकालत्वत्वावच्छिन्नप्रतियोगिता-काभावसमनियतत्वेन तदभिन्नतया स्वीयकालत्वनिष्ठप्रतियोगितावच्छेदकी-भूतस्वरूपसंबन्धघटितव्यापकतावच्छेदकीभूतवाच्यत्वत्वावच्छिन्नप्रतियोगिताकस्य यथोक्तस्यापि लक्षणघटकतया तस्य च स्वीययत्प्रतियोगितावच्छेदक-संबन्धेन तत्प्रतियोगितावच्छेदकावच्छिन्नसामानाधिकरण्याप्रसिद्ध्याव्याप्ति-रित्युच्येत; तदा स्वावच्छेदकसंबन्धघटितसाध्यतावच्छेदकावच्छिन्नव्याप-कतावच्छेदकरूपावच्छिन्नप्रतियोगिताका इत्येव निवेश्यम्। स्वं—प्रति-योगिता। कालिकसंबन्धावच्छिन्नवाच्यत्वत्वावच्छिन्नप्रतियोगिता स्वरूप-संबन्धावच्छिन्नकालत्वत्वावच्छिन्नप्रतियोगिता वा न तादृशीति न दर्शिता-व्याप्तिः। इत्थं चायमात्मा ज्ञानात् इदं वाच्यं ज्ञेयत्वादित्यादौ व्यधिकरण-धर्मावच्छिन्नप्रतियोगितयैव तादृश्या भवितव्यमिति व्यक्तमिदानीं मति-योग्यवृत्तिश्चेत्यादिग्रन्थोत्थितिः। धूमवान् वह्नेरित्यादौ धूमवत्त्वप्रकारकप्रमा-विशेष्यत्वाद्यभावस्य पूर्वक्षणवृत्तित्वविशिष्टस्वाभावनिष्ठप्रतियोगितावच्छेदकी-भूतस्वरूपसंबन्धेन तदवच्छेदकीभूततादृशाभावत्वावच्छिन्नसामानाधिकरण्य-मादायातिव्याप्तिवारणाय भावत्वविशेषणमपि नानुपपन्नम्; किन्तु समा-धानान्तरं मृग्यम्।

इति द्वितीयस्वलक्षणम्

---

श्रीरस्तु

# तत्त्वचिन्तामणौ चतुर्दशलक्षणी

अथ "इदं वाच्यं ज्ञेयत्वा" दित्यत्र समवायितया वाच्यत्वाभावो घट एव [1]प्रसिद्धः, व्यधिकरणधर्मावच्छिन्नाभावस्य केवलान्वयित्वात् । न चैवं घट एव व्यभिचारः साध्यतावच्छेदकावच्छिन्नसाध्याभाववद्वृत्तित्वं हि व्यभिचारः, न च वाच्यत्वाभावस्तादृशो घट इति चेत्; तर्हि तादृशसाध्याभावसामानाधिकरण्याभावो व्याप्तिः, तथा चाप्रसिद्धिः ।

## दीधितिः

"समवायितये"ति । वाच्यत्वं यथा न समवायि, तथाऽग्रे वक्ष्यते; घटादिसमवायितयेत्यर्थ इत्यप्याहुः । प्रमेयसाध्यके च भावत्वेन अभावानामभावत्वेन भावानां वह्नित्वेन निर्वह्नौ अवृत्तिमात्रवृत्तिगगनत्वादिना विरुद्धघटत्वपटत्वाभ्यां च प्रमेयमात्रस्याभावः सुलभः ।

इति व्यधिकरणधर्मावच्छिन्नाभावावतरणम्

---

[1] प्रसिद्ध एवेति योजना—स्व.

ननु पारिभाषिकमेवाव्यभिचरितत्वम्, तथाहि—यत्समानाधिकरणा साध्यतावच्छेदकावच्छिन्नव्यापकतावच्छेदकप्रतियोगिताका[1] यावन्तोऽभावा· प्रतियोगिसमानाधिकरणा तत्त्वम्।

सर्वत्र वाच्यत्वाद्यभावस्य तथात्वाद्यावत्त्वोपादानम्, अत एव "भूतत्वमूर्तत्वोभयवान् मूर्तत्वा" दित्यादौ द्वित्वावच्छिन्नाभावस्य प्रतियोगिसामानाधिकरण्येऽपि भूतत्वमनोन्यत्वाद्यभावस्य अतथात्वात् नातिप्रसङ्ग। साधनसमानाधिकरणगोत्वाद्यभावस्य तत्तत्साध्यव्यक्त्यभावस्य वा अतथात्वात् "साध्यतावच्छेदके" त्यादि।

येन सम्बन्धेन हेतुस्तेनैव सम्बन्धेन तदधिकरणत्व बोध्यम्। तेन आत्मत्वे साध्ये समवायन हेतो ज्ञानस्य विषयतयाधिकरणे घटादौ वर्तमानस्य साध्याभावस्यातथात्वेऽपि न क्षति। एव दलान्तरेऽपि सम्बन्धभेदनिबन्धनो दोष सम्बन्धैक्यविवक्षया निरसनीय।

रूपादिसामान्याभावे साध्ये पृथिवीत्वादिक सद्धेतुरेव, प्रलय परमाणौ उत्पत्तिकाले चावयविनि तत्सत्वात्। न च प्रतियोगिवत् ध्वसप्रागभावयोरत्यन्ताभावविरोधित्वम्, मानाभावात्। अत एव "अन्तरा श्यामे [2]रक्त रूप नास्ती"ति प्रत्यय। न चैष रक्तिमध्वसाद्यवगाही, पूर्वापररक्तिमध्वसप्रागभाववति मध्य रक्तेऽपि तथा प्रत्ययप्रसङ्गात्।

तत्सामानाधिकरण्य च स्वविशिष्टहेत्वधिकरणावच्छेदेन बोध्यम्, तेन गोत्वजन्यद्रव्यत्वप्रलयावृत्तित्वादिना गवादेरभावस्य गवाद्यनधिकरण

[1] अत्र व्यापकतावच्छेदकप्रतियोगिताका इत्यत्र व्यापकताया अवच्छेदो ययेति बहुव्रीहौ कप्रत्यय तेन प्रतियोगितया सममवच्छेदिकापदस्य समासे चोपघत्वेऽपि पुवद्भाव —ज

[2] न च गुणे शुक्लादय पुसीत्यनुशासनात रक्तो नास्तीत्येव प्रयोगो युक्त इति वाच्यम्, वस्त्वन्तरविशेषणतानापन्नस्यैव शुक्लादिशब्दस्य पुस्त्वानुशासनात, अत एव शुक्लरूपमिति प्रयोग मणिकृतैव वक्ष्यते इति ध्येयम्—ज

र्धम्यवच्छेदेन तद्वति काले महाकाले वा वृत्तावपि "यदा गोत्वं तदा गौः" "यदा कालत्वं तदा जन्यद्रव्यं प्रलयावृत्ति वे"त्यादौ नातिप्रसङ्गः, हेतुमति प्रलये तत्सामानाधिकरण्याभावात्। "स्वविशिष्टे"ति विशेषणात् "कपिसंयोगाभाववान् मेयत्वा"दित्यादौ संयोगाद्यात्मकसाध्याभावस्य सकलहेत्वधिकरणावृत्तित्वेऽपि नाव्याप्तिः।

जलादिवृत्तित्वविशिष्टगोत्वाद्यभावस्याभावो जलत्वाद्यभाव एव; न तु धूमाद्यभावः, जलादावपि तदभावप्रत्ययप्रसङ्गात्।

इति प्रथमस्वलक्षणम्

---

यत्समानाधिकरणानां साध्यतावच्छेदकावच्छिन्नव्यापकतावच्छेदकरूपावच्छिन्नप्रतियोगिताकानां यावतामभावानां प्रतियोगितावच्छेदकावच्छिन्नसामानाधिकरण्यं तत्त्वं वा तत् ज्ञेयत्वादिना वाच्यत्वादीनामभावस्सुलभ एव; शेषं दर्शितदिशाऽवसेयमित्यत आह—प्रतियोग्यवृत्तिश्चेति।

इति द्वितीयस्वलक्षणम्

---

# PUBLICATIONS OF THE ADYAR LIBRARY

## (The Theosophical Society, Adyar, Madras, S India)

Rs A

**1910**

1 A PRELIMINARY LIST OF THE SAMSKRT AND PRAKRT MSS in the Adyar Library (Saṃskṛt Devanagari) — Boards 1 8; Cloth 2 0

**1912**

2 A DESCRIPTIVE CATALOGUE OF THE SAMSKRT MSS in the Adyar Library *By* F O Schrader Ph D Vol I Upanisads — Cloth 5 0

3 THE MINOR UPANISADS (Saṃskṛt) critically edited for the Adyar Library *By* F O Schrader Ph D Vol I—Saṃnyāsa — Cloth 10 0

**1916**

4 AHIRBUDHNYA SAMHITA OF THE PAÑCARATRA ĀGAMA (Saṃskṛt). Edited under the supervision of F O Schrader Ph D 2 Vols — Cloth 10 0

5 INTRODUCTION (English) TO THE PAÑCARATRA AND THE AHIRBUDHNYA SAMHITA *By* F O Schrader Ph D — Cloth 3 0

**1920**

6 YOGA UPANISADS—20—with the Commentary of Sri Upaniṣad Brahma Yogin Edited *by* Paṇḍit A Mahadeva Sastri B A — 5 0

**1921**

7 SAMANYA VEDANTA UPANISADS—24—with the commentary of Sri Upaniṣad Brahma Yogin Edited *by* Paṇḍit A Mahadeva Sastri B A — 5 0

**1923**

8 VAISNAVA UPANISADS—14—with the Commentary of Śri Upaniṣad Brahma Yogin Edited *by* Paṇḍit A Mahadeva Sastri B A — 4 0

**1925**

9 ŚAIVA UPANISADS—15—with the Commentary of Śri Upaniṣad Brahma Yogin Edited *by* A Mahadeva Sastri B A — 3 0

10 SAKTA UPANISADS—8—with the Commentary of Śri Upaniṣad Brahma Yogin Edited *by* Paṇḍit A Mahadeva Sastri B A — 2 8

**1926**

11 CATALOGUE OF SAMSKRT MSS in the Adyar Library (revised) Edited *by* the Paṇḍits of the Adyar Library under the direction of Prof C Kunhan Raja M A D Phil (Oxon) 2 Vols — Each 3 12

12 [illegible] Brahm[illegible] Paṇḍits of the Ady[illegible] M A D Phil [illegible] C Kunhan Raja — 4 0

13 RUKMINI KALYANA MAHA KAVYA by Rājacūḍāmaṇi Dikṣita Edited *by* the Paṇḍits of the Adyar Library and Mr T R Chintamani M A under the direction of Prof C Kunhan Raja M A, D Phil (Oxon) — 2 0

**1933**

14 UNPUBLISHED MINOR UPANISADS with the Commentary of Śri Upaniṣad Brahma Yogin Edited *by* the Paṇḍits of the Adyar Library, under the direction of Prof C Kunhan Raja M A D Phil (Oxon) — 5 0

1936 Rs

15 TEN MAJOR UPANISADS with the Commentary of Sri Upanisad Brahma Yogin Ed ted by the Pand ts of the Adyar Library under the direct on of Prof C, Kunhan Raja M A D Phil (Oxon )

Is'a to Aitareya Vol I — 4

Chāndogya and Bṛhadāraṇyaka Vol II .. — 6

Vol I Boards }
Vol II } — 9

1937

16 MELARAGAMALIKA of Mahāva dyanātha S'ivan Edited by Pandit S Subrahmanya Sastri F T S — 2 |

1938

17 SANGRAHACŪḌAMAṆI—Edited by Pandit S Subrahmanya Sastri F T S with a critical Introduction in Engl sh by T R Srini vasa Aiyangar B A L T — 5 (

18 PRATYABHIJÑĀHṚDAYAM (The Secret of Recognition) with Eng sh Translat on and Notes by K F Le decker M A Ph D Text edited by the Staff of the Adyar Library under the d rection of Dr G Srinivasa Murti B A B L M B & C M Vaidya — 3 (

19 [illegible] — 2 4

20 [illegible] Aiyangar B A L T and Pandit S Subrahmanya Sastri F T S — 5 0

21 * WHERE THEOSOPHY AND SCIENCE MEET (in four Parts) by a body of experts—Edited by Professor D D Kanga M A I E S (Retd )

Part 1 Nature—From Macrocosm to M crocosm — 1 14
Part 2 Man—From Atom to Man — 1 14
Part 3 God—From Humanity to Div nity — 2 4
Part 4 Some Pract cal Applicat ons — 2 4

1939

22 ṚGVEDAVYAKHYĀ MADHAVAKṚTA—Ed ted by Prof C Kunhan Raja M A D Phil (Oxon ) Vol I — 6 0

1940

23 THE NUMBER OF RASAS By V Raghavan M A Ph D Department of Saṃskṛt University of Madras w th a Foreword by Prof M Hiriyanna M A formerly Professor of Saṃskṛt Maharajah s College Mysore — 3 0

1941

24 SAMANTA VEDANTA UPANISADS—Translated into English by T R Srinivasa Aiyangar B A L T and Pandit S Subrahmanya Sastri F T S — 5 0

25 BHAGAVADGĪTĀRTHAPRAKAS'IKA of Upanisad Brahmayogin (Saṃskṛt) Edited by the Pand ts of the Adyar Library with an Introduction by Prof C Kunhan Raja M A D Ph l (Oxon ) — 4 0

26 SAMAVEDA SAṂHITA—With the Commentar es of Madhava and Bharatasvāmin Edited by Prof C Kunhan Raja M A D Phil (Oxon ) — 6 0

* *Published under the auspices of the Adyar Library Association*

Rs A

27 RAJA DHARMA (Dewan Bahadur K Krishnaswami Rao Lectures 1938 University of Madras) *by* Rao Bahadur K V Rangaswami Aiyangar M A — 3 8

28 VARIVASYARAHASYAM of Bhasuranandanatha (2nd Edition) by Paṇḍit S Subrahmanya Sastri F T S (with English Translation) — 2 8

29 VYAVAHARANIRṆAYA OF VARADARAJA—Edited *by* Rao Bahadur K V Rangaswami Aiyangar M A and A N Krishna Aiyangar M A L T Adyar Library with a FOREWORD *by* Sir P S Sivaswamy Aiyer K C S I C I E LL D

30 SAṂGITARATNAKARA—With the Commentaries of Catura Kallinātha and Simhabhupāla Edited *by* Paṇḍit S Subrahmanya Sastri F T S Vol I

1942

31 CATALOGUE OF THE ADYAR LIBRARY Western Section part 1—prepared under the direction of Bhikshu Arya Asanga Jt Director and Curator Western Section Adyar Library — 5 0

32 ĀLAMBANAPARIKṢA AND VṚTTI *by* Dinnāga with English translation Tibetan text etc by Paṇḍit N Aiyaswami Sastri Tirupati — 3 8

33 SOME CONCEPTS OF ALAṄKARA SASTRA *by* V Raghavan M A Ph D University of Madras — 4 0

34 VEDANTAPARIBHASA—with English translation and Notes *by* Prof S S Suryanarayana Sastri M A B Sc (Oxon) Bar at Law Reader Head of the Department of Philosophy University of Madras — 2 12

35 A DESCRIPTIVE CATALOGUE of the Sanskrit Manuscripts in the Adyar Library *by* K Madhava Krishna Sarma M O L under the direction of Prof C Kunhan Raja M A D Phil (Oxon) Vol I—Vedic — 15 0

36 SRI PAÑCARATRA RAKSA of Sri Vedanta Desika—Edited *by* Vaidyaratna Paṇḍit M Duraiswami Aiyangar and Vedanta Siromaṇi T Venugopalacharya with an Introduction in English by G Srinivasa Murti Hon Director Adyar Library — 4 8

37 CATALOGUE OF THE ADYAR LIBRARY Western Section part 2 prepared under the direction of Bhikshu Arya Asanga Jt Director and Curator Western Section — 4 8

38 CATURDASALAKSANI OF GADADHARA with three commentaries—Edited *by* Paṇḍit N Santanam Aiyar Vol I

PAMPHLETS

1939

## IN THE PRESS

1 ĀSVALĀYANAGRHYA-SŪTRA—With Devasvāmi Bhāsya—Edited by Swami Ravi Tirtha
2 ĀSVALĀYANAGRHYA SŪTRA (Bhāṣya of Devasvāmi) Translated into English by A N Krishna Aiyangar, M A, L T, Adyar Library
3 JIVĀNANDANAM OF ĀNANDARĀYAMAKHI with a Commentary by Vaidya ratna Paṇḍit M Duraiswami Aiyangar Edited by Vaidyaratna G Srinivasa Murti B A, B L, M B & C M and Vaidyaratna Paṇḍit M Duraiswami Aiyangar
4 VAISNAVA UPANISADS—Translated into English by T R Srinivasa Aiyangar, B A, L T and Dr G Srinivasa Murti Hon Director, Adyar Library.
5 UṢĀNIRUDDHO of Rāma Pāṇivāda Edited by Paṇḍit S Subrahmanya Sastri, F T S and Prof C Kunhan Raja M A., D Phil (Oxon)
6 NYĀYAKUSUMĀÑJALI of Udayanācārya—Translated into English by Swami Ravi Tirtha
7 THE ĀPASTAMBASMṚTI—Edited by A N Krishna Aiyangar, M A, L T, Adyar Library
8 THE ACYUTARAYĀBHYUDAYAM of Rājanātha Diṇḍima—Sargas 7 to 12—
9 M A,
10. , Adyar Library
11. KĀLĀDARŚA OF ĀDITYA BHAṬṬA—Edited by Rao Bahadur K V Rangaswami Aiyangar M A, and A N Krishna Aiyangar, M A, L T, Adyar Library
12 PAKṢATĀ OF GADĀDHARA—with four commentaries by Paṇḍit N Santanam Aiyar
13 N Srini
14 a Edited and A N
15 Vol II and III by Paṇḍit N Santanam Aiyar

## WORKS UNDER PREPARATION

1 AVAYAVA OF GADĀDHARA—with commentaries by Paṇḍit N Santanam Aiyar
2 English Translation and Notes by
3 with commentaries Edited by
4 commentaries Edited by Paṇḍit
5 VYUTPATTIVĀDA OF GADĀDHARA with commentaries Edited by Paṇḍit N Santanam Aiyar

*Agents for our publications:*

**THE THEOSOPHICAL PUBLISHING HOUSE**

**Adyar, Madras, S. India**